# FOREWORD

We are happy to place in the hands of the readers *Sugamā* of Deśika Tirumalai Tātācārya which is a short and lucid commentary (*Vṛtti*) on the Vaiśeṣikasūtras of Kaṇāda.

The *Vaiśeṣikasūtras* are considered to be the oldest philosophical sūtras among the orthodox systems of Indian Philosophy and are usually assigned to the 5th c. B. C. The *philosophy* of Vaiśeṣika, however, might be still older since one could easily show the influence of some of its theories on the formation of Buddhism and Jainism. In the early centuries of Christian era, Vaiśeṣika comes closer to Nyāya and the *Praśastapāda bhāṣya* (4th c. A. D.) which is more of an independent work than a commentary on the Vaiśeṣikasūtras, shows a marked influence of the Nyāyabhāṣya of Vātsyāyana. So also is the case with the four commentaries (Vyomavatī, Nyāyakandalī, Kiraṇāvalī and Līlāvatī) on the Praśastapādabhāṣya written between the 9th and 11th c. A. D. Corresponding to the development of the system, a few new sūtras have been added to the *Vaiśeṣikasūtras* from time to time to make room for new ideas. Some efforts have been undertaken recently to reconstruct the original character of the Vaiśeṣikasūtras on the basis of contents analysis.

Pt. Tātācārya accepts and follows the order of Sūtras as suggested by Vīrarāghavācārya. The Vṛtti aims at elucidating the sūtras in their own light devoid

of foreign or later influence. How far the author has suceeded in his aim, scholars only can decide.

The work is being published posthumously. Pt. Tatācārya was born at Tiruvarangam (Tamilnadu) in 1894 and died in 1974 at Madras He was undoubtedly one of the greatest scholars of Nyāya, Pūrvamīmāṃsā and Viśiṣṭādvaita-Vedānta of his time in his region. He had the privilege of learning at the feet of such illustrious Gurus as Pt. Shrinivasacharya and Pt. Kuppuswami Shastri at Kumbakanam and Tiruvaiyāru. He taught Mīmāṃsā at Tiruvaiyaru, was Reader at the Oriental Research Institute, Tirupati and even adorned the post of Principal of the Tirupati Sanskrit College. He has written over a dozen books on various *darśanas* and *sāhitya* and has created many literary works himself. He was closely associated with the preparation of *Darśanakośa* (a Lexicon of Indian Philosophy). For more than thirty years he edited and published a Sanskrit Magazine named Udyānapatrikā. For his services towards Sanskrit, he was honoured by the President of India in 1965.

The credit to bring the Sugamā to light goes to Pt. Ranganathacharya, Lecturer in Tamil at the Allahabad University who is also related to the author. He picked up this work from amongst the manuscripts left by Pt. Tatācharya and brought it to Allahabad where he prepared a press copy by ably editing it.

The work was originally published in the Vols. XXXII and XXXIII of the Journal of this Vidyapeetha. It is now being issued separately for the benefit of those who want to procure and possess it independently.

I am confident that this scholarly yet precise and transparent commentary shall be very helpful in introducing the readers to the original source of the Vaiśeṣika Philosophy.

**G. C. Tripathi**
*Principal*
G. N. Jha Kendriya Sanskrit Vidyapeetha

ALLAHABAD.
25th March, 1979

# सम्पादकीयम्

आस्तिकदर्शनेषु अन्यतमस्य वैशेषिकदर्शनस्य मूलं कणादकृतवैशेषिकसूत्राणि। दर्शनस्यास्य वैशेषिकदर्शनमिति प्रसिद्धिं, कणाद इति नाम्नः सार्थकत्वं, अस्य ग्रन्थस्य प्रतिपाद्यविषयं प्रति च यद्वक्तव्यं तत् वृत्तिकारैः श्रीताताचार्यैरेव स्व-भूमिकायामुक्तमिति न तत्र व्याप्रियते। अस्या वृत्तेः वैशिष्ट्यमात्रमत्रातिसंक्षेपेण निरूप्यते।

वैशेषिकसूत्राणां व्याख्यानरूपेणाद्योपलभ्यमानेषु ग्रन्थेषु प्रशस्तपादकृतभाष्यं, शङ्करमिश्रकृतः उपस्कारः, दरभङ्गाविद्यापीठात् प्रकाशिता अज्ञातकर्तृका काचन टीका, गायकवाड ओरियण्टल सीरिज् द्वारा प्रकाशिता चन्द्राननामकस्य पण्डितस्य टीका, पण्डितश्रीजयनारायणभट्टाचार्यस्य टीका, पण्डितश्रीचन्द्रकान्ततर्कालङ्कारस्य टीका, तथा मद्रासनगरीय-अभिनवदेशिक-उत्तमूर-श्रीवीरराघवाचार्यैः कृतं व्याख्यानं च विशेषतः उल्लेखमर्हन्ति। मूलग्रन्थस्य दुरूहत्वे तत्प्रतिपाद्यार्थस्य स्फुटी-करणाय व्याख्याननिर्माणे प्रवृत्तिरिति विदितं सर्वेषाम्। यदि मूलग्रन्थार्थप्रकाशन-मात्रं व्याख्यानानामुद्देश्यं तत् कथमेकस्यैव मूलग्रन्थस्यानेकव्याख्यानानामुत्थितिः, एकेनैव पर्याप्तं किल इति शङ्का जायते। अस्याः शङ्कायाः समाधानं विद्वद्भिः बहुधा क्रियते। स्थितं व्याख्यानं मूलग्रन्थाभिप्रेतं सर्वमप्यर्थं न प्रकाशयतीति बुद्ध्या व्याख्यानान्तररचनायां प्रवृत्तिर्जायते। अथवा मूलग्रन्थेनानभिप्रेतः स्वेष्टः अर्थः मूलोपरि आरोपितः, सः निराकरणीयः, मूलाभिमतार्थः प्रकाशनीय इति मत्या अन्या व्याख्या विधीयते। अथवा केचन साहसिकाः स्वकपोलकल्पित-स्यार्थस्य बहुजनपरिग्रहेच्छया मूलग्रन्थशिरसि हठादारोपणाय व्याख्यानरचनायां प्रवर्तन्ते, यान् प्रति प्रसिद्धेयमुक्तिः —

सूत्राभिप्रायसंवृत्त्या स्वाभिप्रायप्रकाशनात्।
व्याख्यातं यैरिदं शास्त्रं व्याख्येयं तन्निवृत्तये॥

वैशेषिकसूत्राणां व्याख्यानेषु प्रशस्तपादभाष्यं एतच्छास्त्रव्युत्पित्सूनां अत्यन्तमुपकारकम्। सूत्रोक्तानर्थान् क्रोडीकृत्य, द्रव्यगुणादिपदार्थानामुद्देशं यथावत् कृत्वा, तेषां परस्परसाधर्म्यं गंभीरसुगमपंक्तिभिः विशदयति भाष्यमिदम्। सूत्राणि प्रातिस्विकरूपेणादाय, तद्गतपदानामर्थवर्णनं न करोति। **"प्रणम्य हेतुमीश्वरं मुनिं कणादमन्वतः। पदार्थधर्मसङ्ग्रहः प्रवक्ष्यते महोदयः"** इत्यारम्भं कुर्वदिदं भाष्यं सूत्रानुसारेण 'पदार्थधर्मसंग्रह' मेव करोति। प्रकारान्तरेणेदं भाष्यं स्वतन्त्रग्रन्थ इति व्यपदेष्टुमुचितम्। ये सूत्रगतपदानामर्थं, तदभिमततात्पर्यमात्रं जिज्ञासन्ते, अधिकविचारे न प्रविवृत्सन्ति तैः व्याख्यानान्तरमेवान्वेषणीयं भवति। शङ्करमिश्रकृतोपस्कारादिकमपि प्रौढमात्रोपकारकम्। अत्र प्रस्तूयमाना इयं वृत्तिः सुगमा स्वनामानुरूपं सूत्रगतपदानामर्थमुपवर्ण्य, तदाशयमतिसरलैः सुबोधैः वाक्यैः विवृणोति। अल्पाक्षरसूत्राणां यथावदवबोधनाय तेषां पूर्वापरसङ्गतिज्ञानमत्यन्तमावश्यकम्। इयं वृत्तिः प्रायः सर्वेषां सूत्राणां परस्परसङ्गतिमवबोधयति। प्रथममवतारिकामारचय्य सूत्रपदानामन्वयं प्रदर्श्य, समस्तपदानि विगृह्य, यत्रापेक्षितं तत्र स्वल्पं विचारं कृत्वा सूत्रोक्तार्थं समर्थ्य, वैशेषिकदर्शनबुभुत्सूनां महदुपकरोति। अत्र स्थालीपुलाकन्यायेन कानिचन स्थलानि निदर्शयामः।

प्रथमाध्यायप्रथमाह्निके सप्तमं सूत्रं 'उत्क्षेपणमपक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्माणि' इति। अत्रोत्क्षेपणं कर्म लक्षयत् प्रशस्तपादभाष्यं—शरीरावयवेषु तत्संबद्धेषु च यदूर्ध्वभाग्भिः प्रदेशैः संयोगकारणमधोभाग्भिश्च प्रदेशैः विभागकारणं कर्मोत्पद्यते गुरुत्वप्रयत्नसंयोगेभ्यः तदुत्क्षेपणम्, इति। इयं सुगमा वृत्तिस्त्वेवं लक्षयति—कस्यचिद्वस्तुनः ऊर्ध्वदेशसंयोगानुकूलो व्यापारः इति। अनयोः द्वयोर्लक्षणयोः दुर्गमसुगमत्वं स्पष्टम्। एतत्सूत्रप्रतिपाद्यविषये काचन शङ्का भवति। अत्रानिर्दिष्टानि, एतेषु पञ्चसु अनन्तर्गतान्यपि कुलालक्रियमाणचक्रभ्रमणादीनि सन्ति। तत्कथमस्मिन् सूत्रे पञ्चैव कर्माणि परिगण्यन्ते इति। अस्याः शङ्कायाः समाधानं भ्रमणादिकर्माणि गमने अन्तर्भाव्य विहितं प्रशस्तपादभाष्ये, तदनुसारिव्याख्यानान्तरेषु च। परं त्वस्यां वृत्तौ 'पञ्चभ्य अतिरिक्तान्येवेमानि कर्माणि। तर्हि पञ्चधा विभागानुपपत्तिरिति चेत्, नात्र तथा विभाग इष्यते। इतिशब्दस्य प्रकारार्थत्वात्। इति-एवं प्रकाराणि कर्माणि इत्यर्थात्, इति समाहितम्। अस्य समाधानस्यौचित्याधिक्यं संमन्येरन् मनीषिण इति मन्यामहे।

अस्मिन्नेवाह्निके द्वादश सूत्रं "तथा भवतीति सापेक्षेभ्यो निरपेक्षेभ्यश्च' इति। अत्र सापेक्षशब्दः तन्त्वन्तरसंयुक्तः इति, निरपेक्षशब्दः तन्त्वन्तरसंयोगरहितः इति च, अनया वृत्या व्याख्यातौ। अपरस्मिन्नेकस्मिन् व्याख्याने "असंयुक्ततया

पटं प्रति सापेक्षा:, कृतसंयोगतया निरपेक्षा:, इति विवृतम्। सुगमायां सापेक्षनिरपेक्षशब्दौ संयुक्ततत्वावस्थायां स्वस्थितौ एकस्य तन्तो: अपरतन्त्वपेक्षाया: सत्त्वात् सापेक्षत्वम्, असंयोगावस्थायां पृथक् स्थितानां तन्तूनां स्वस्थितौ तन्त्वन्तरापेक्षाविरहात् निरपेक्षत्वमिति हेतूपन्यासपूर्वकं व्याख्यातौ। अत्र कृत: पक्षान्तरस्यापि उल्लेख: वृत्तिकाराणां परगतगुणानुमोदनं प्रकटयति ।

द्वितीयाध्यायद्वितीयाह्निके नवमं सूत्रं नित्येष्वभावादनित्येषु भावात् कारणे कालाख्येति इति। अस्य सूत्रस्य प्रधानप्रतिपाद्य: अर्थ: 'काल: सर्वकार्यकारण'मिति। सूत्रे तु केवलं कारणशब्द एवास्ति। न तु सर्वकारणमिति। वैशेषिकरसायनाख्ये व्याख्याने उपाधिरूपे कारणे कालाख्येति हेतो: काल: सर्वकार्यकारणमिति शेषपूरणेन व्याख्येयमिति अन्ते हेतूपन्यासपूर्वकं निर्व्यूढम्। एतद्व्याख्यानुसारेण अत्र सूत्रे काचिन्न्यूनता वर्तते, सा शेषपूरणेन समीकरणीया इति भाति। अस्यां वृत्तौ पुन: सूत्रव्याख्यानारम्भ एव 'इयं न केवलमाकाशादितुल्ये कस्मिंश्चित् द्रव्ये, अपि तु कारणे सर्वकार्यकारणभूते। काल: सर्वकार्यकारणमित्यर्थ:' इति सूत्रगतपदान्येवाभीप्सितार्थं प्रतिपादयन्तीति सूचितम् ।

पञ्चमाध्यायद्वितीयाह्निके एकविंशं सूत्रं द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यात् भाऽभावस्तम: इति। अनेन सूत्रेण तम: न द्रव्यं, न वा गुण:, न वा कर्म, अपि तु प्रकाशाभाव एव तम: इति स्थाप्यते। अस्य सूत्रस्य आशयं पर्वक्रमेण द्वित्रिपदघटितै: कतिपयैरेव वाक्यै: स्पष्टीकरोति इयं वृत्ति:। 'एवं तावत् तम: न द्रव्यं गुण: कर्म वा। किं तर्हि? अभाव:। कस्य अभाव:? भाया: प्रकाशस्याभाव:। कस्मात्? प्रकाशविरुद्धत्वात्। प्रकाशतमसोर्हि मिथो विरोध:।' इत्यादिविवरणवाक्यानि अल्पज्ञानपि प्रतिबोधयितुं समर्थानीत्यत्र न सन्देह: ।

सप्तमाध्यायद्वितीयाह्निकत्रयोदशं सूत्रं 'युतसिद्ध्यभावात् कार्यकारणयो: संयोगविभागौ न विद्येते' इति। एतत्सूत्रघटकयुतसिद्ध्यभावात् इत्यस्य प्राय: सर्वेषु व्याख्यानेषु 'युतं अमिश्रितं, युतयोरमिश्रितयो: असंबद्धयो: सत्ता युतसिद्धि:। संबन्धिनो: सत्ताकाले मिथ: कदाचिदसंबद्धत्वमिति यावत्' इति विवरणं कृतं दृश्यते। यद्यपि 'यु मिश्रणामिश्रणयो'रिति धातो: युतशब्द: निष्पन्न: तथाऽपि अमिश्रणार्थमात्रमादाय व्याख्यातम्। अस्यां तु वृत्तौ मिश्रणामिश्रणरूपार्थद्वयमपि स्वीकृत्य कृत: निर्वाह: शब्दार्थविदां तोषाय कल्पेत ।

एवं पाठकाः अस्यां वृत्तौ बहून् गुणान् स्वयमवधारयेयुः। वृत्तिकाराः श्री ताताचार्यमहाशयाः सर्वशास्त्रविशारदा इति संस्कृतलोको जानात्येव। आचार्यमहोदयैः स्वपीठिकायां तान् प्रति यद्वक्तव्यं तदुक्तमेव। अतः तद्विषये नास्माभिः विशिष्य किञ्चिदत्र लिख्यते। संस्कृतग्रन्थानां तत्रापि शास्त्रग्रन्थानां लेखकाः अतिविरलाः। कथञ्चित् लेखनेऽपि तद्ग्रन्थानां मुद्राप्य प्रकाशनं दुष्करं वर्तते। इयं वृत्तिरपि वृत्तिकारेषु ताताचार्येषु जीवत्सु प्राकाश्यं नालभत। अद्य गंगानाथझा-केन्द्रीय-संस्कृत-विद्यापीठाधिकारिभिरियं वृत्तिः प्राकाश्यं नीता इति तद्विषये अस्माकं कृतज्ञतां निवेदयामः। आशास्महे चानया वृत्त्या वैशेषिकदर्शनाध्येतारः अत्यधिकं साहाय्यं प्राप्नुयुरिति।

वि. श्री. रङ्गनाथाचार्यः

# भूमिका

न्यायवैशेषिके, साङ्ख्ययोगौ, पूर्वोत्तरमीमांसे इति षड्दर्शनी प्रसिद्धा। तस्यां वैशेषिकं प्राचीनतममिति तत्स्वरूपं परिशीलयतां धीमतां निश्चयो न न भवेदित्यस्माकं दृढा मतिः। न्यायवैशेषिके इत्यत्राल्पाच्तरत्वात् न्यायशब्दस्य पूर्वनिपातः। न तु तस्य दर्शनस्य एतदपेक्षया कालतः प्राचीनत्वात्।

कणाद इति किं दर्शनप्रवर्तकस्य महर्षेः पितृकृतं रूढं नाम अथवा निमित्त-विशेषाज्जातमिति न निश्चित्य किमपि वक्तुं शक्यते। औलूक्यमित्यपि दर्शनमिदं व्यवह्रियते। तत्रापि हेतोरध्यवसानं दुष्करम्। महर्षिरयं दर्शनकारेभ्योऽन्येभ्यः सर्वेभ्यः प्राचीन इत्येतावन्मात्रमवगम्यते। न त्विदन्तया तज्जीवनकालः। बुद्धादप्ययं प्राचीन इति ग्रन्थकालचिन्तकाः सर्वे सम्प्रतिपन्नाः।

सूत्रात्माऽयं ग्रन्थः दशाध्यायीमयः। प्रत्यध्यायं द्वे आह्निके। शासनात पदार्थ-तत्त्वबोधनात् शास्त्रमिदं भवति। पदार्थाः सत्यानि वस्तूनि। ते अस्य शास्त्रस्य विषयाः। कति, के ते, किंस्वभावा इति तेषां विविच्य निरूपणमिह क्रियते। ते सप्त-द्रव्यं गुणः कर्म सामान्यं विशेषः समवायः अभावः इति। एषु द्रव्यादीन् षडेव पदार्थान् प्रथमं निर्दिश्य तेषां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानं सम्पाद्यं ज्ञापयति। प्रथमं निर्देशं विना अभावपदार्थं प्रत्यक्षज्ञानप्रकरणे नवमाध्याये निरूपयति। एवंकरणेन प्रथमं भावाभाव-रूपेण पदार्थौ द्विविधः, तत्र भावः षड्विध इति पदार्थविभागे विशेषं ज्ञापयति।

अस्मिन् शास्त्रे क्रियमाणं विषयाणां निरूपणं आकुलं सङ्गतिहीनं प्रौढशास्त्रो-चितप्रक्रियाशून्यं, असारं, पुनरुक्तं, बहुषु स्थलेषु दुर्ग्रहं च सत्यं भाति। उक्तवन्तश्च केचित्—

अतिविरसमसारं मानवार्ताविहीनं
प्रविततबहुवेलप्रक्रियाजालदुःखम्।
... ... ... ...
दुर्वाधसममतन्त्रं तन्त्रमेतद्वदन्ति॥ इति।

अथापि अस्त्येव तत्र कश्चन क्रमश्च सङ्गतिश्च । तथा हि । उद्दिष्टेषु षट्सु पदार्थेषु चरमसमवायवर्जं इतरपञ्चकविवेचनं प्रथमाध्यायार्थः । तत्र द्रव्यगुणकर्मणां साधर्म्यवैधर्म्यप्रदर्शनं प्रथमाह्निके । सामान्यस्य विशेषपदार्थस्य च निरूपणं द्वितीये । 'अन्यत्रान्त्येभ्यो विशेषेभ्यः' इति सूत्रे चरमव्यावर्तकत्वाभिधानेनैव विशेष पदार्थस्वरूपादिकं प्रतिपादितं भवतीति मेने । अतस्तद्विषये न किञ्चिदन्यदुक्तम् । आत्ममनोव्यतिरिक्तद्रव्यसप्तकनिरूपणं द्वितीयाध्यायार्थः । तत्र आकाशान्तपञ्चकस्य निरूपणं प्रथमाह्निके । अनन्तरे प्रथमं भूतानां गन्धादिगुणव्यवस्थोच्यते । तत्र पृथिव्यां गन्धवत्त्वं अग्नेरुष्णस्पर्शवत्त्वं अपां शीतस्पर्शवत्त्वं च कण्ठोक्तम् । गन्धाद्यसमानाधिकरणस्पर्शवत्त्वं वायौ शब्दवत्त्वमाकाशे च व्यवस्थितमिति पूर्वमेवोक्तमिति नेहोच्यते ।

अनन्तरं क्रमप्राप्तकालदिङ्निरूपणम् । तदनन्तर शब्दस्य द्रव्यत्वं निराकृत्य गुणत्वादिकं स्थाप्यते । यद्यप्याकाशसाधनावसरे सर्वद्रव्यनिरूपणात्परं वा एतत् कर्तुं युक्तं तथापि विस्तरापेक्षत्वात्, चेतनभूतात्मतद्धर्मज्ञानकरणमनोरूपद्रव्यान्तरनिरूपणात् पूर्वं तत्करणमुचितमिति बुद्धया चात्र तत्करणमिति ज्ञेयम् । अत्र प्रसङ्गात् प्रथमं संशयहेतूनाह ।

शरीरान्तर्वर्तिद्रव्यनिरूपणं तृतीयाध्यायार्थः । आत्मा मनश्च तादृशं द्रव्यम् । आत्मनिरूपणस्य आह्निकद्वयव्यापित्वेऽपि मनोगतेरपि आत्मलिङ्गत्वात् मध्ये द्वितीयाह्निकारम्भे मनस्साधनम् । अत्र प्रथमाह्निके हेत्वाभासविवेचनं प्रासङ्गिकम् ।

पृथिव्यादीनां चतुर्णां द्रव्याणां नित्यानित्यभेदनिरूपणपरश्चतुर्थोऽध्यायः । तत्र नित्यविषये प्रथमाह्निके प्रसङ्गादेव तस्याप्रत्यक्षत्वं तत्कारणं अन्यस्य प्रत्यक्षकारणं चाह । एतत्प्रसङ्गात् रूपादिगुणोपलब्धिनिरूपणम् । द्वितीये अनित्यं त्रेधा विभज्य शरीरमात्रं निरूपयति । विषयः भोग्यवस्तुरूपः प्रसिद्ध इति मन्यते । इन्द्रियाणि प्रति वक्तव्यं अष्टमे ज्ञाननिरूपणावसरे ब्रवीति । यदुच्यते तत्सङ्गतमिति नियमः । न तु यद्यत्सङ्गतं तत्सर्वमुच्यत इति ।

इत्थं द्रव्यनिरूपणतत्परं द्वितीयाद्यध्यायत्रयम् । एतदनन्तरं निर्देशक्रमेण गुणनिरूपणे कर्तव्येऽपि भोक्तुरात्मनः, भोग्यानां विषयाणां, भोगोपकरणानां शरीरेन्द्रियाणां च निरूपणे कृते भोगहेतोः तद्व्यवस्थापकस्य च पुण्यपापरूपस्य कर्मणः तद्वारा कर्मसामान्यस्य च उपस्थितया तन्निरूपणं पञ्चमषष्ठाभ्यां क्रियते । अत्र लौकिकवैदिकभेदेन कर्मविभागमभिप्रेत्य अध्यायभेदकल्पनम् ।

अनन्तरं सप्तमप्रभृति दशमान्तं अध्यायचतुष्टयं गुणनिरूपणपरम् । तत्र सप्तमाद्ये रूपादयश्चत्वारो गुणाः परिमाणं च विषयीभवन्ति । द्वितीये सङ्ख्यापृथक्त्वे, संयोगविभागौ परत्वापरत्वे च । अत्र संयोगेन शब्दार्थयोस्तदभावोपस्थापनद्वारा तत्सम्बन्धोपस्थापनात् तन्निरूपणं संयोगविभागनिरूपणानन्तरं क्रियते । अत्रान्ते इहेदमिति आधाराधेयभावव्यवस्थापकस्य समवायसम्बन्धरूपस्य षष्ठपदार्थस्य लक्षणादिकमुच्यते । अष्टमे नवमे च बुद्धिनिरूपणम् । तत्र विशिष्टप्रत्यक्षस्य सकारणस्य अष्टमाद्ये । विशिष्टप्रत्ययवत् बुद्ध्यपेक्षः शाब्दव्यवहारः इन्द्रियार्थसन्निकर्षस्येतद्घटकार्थशब्दार्थः,इन्द्रियाणां प्रकृतिश्च द्वितीये ।

बाह्यभावप्रत्यक्षेतरप्रत्यक्षं नवमाद्ये । प्रत्यक्षप्रकरणे तद्विषयतया असदिति धर्मिप्राधान्येन च अभावं निरूपयन् उद्देशसूत्रे अनिर्देशेन ज्ञापितं तस्याप्राधान्यमत्र द्रढयति । प्रत्यक्षेतरबुद्धिनिरूपणं द्वितीये । एतेन बाह्यभावप्रत्यक्षातिरिक्तज्ञाननिरूपणं नवमाध्यायकृत्यमिति फलति ।

सुखदुःखविषयं दशमस्य आद्यमाह्निकम् । इच्छाद्वेषप्रयत्नानां पञ्चमषष्ठयोः प्रसिद्धवद् व्यवहारेण तेषु विशेषेण निरूपणीयं नास्तीति मत्या तन्निरूपणात् उदास्तेति भाति । द्वितीये कारणत्रैविध्यं निरूप्य यथोपक्रमं धर्मस्य आम्नायप्रामाण्यस्य च कीर्तनेन शास्त्रमुपसंह्रियते । ऋषिपदाभिधानेन ईश्वरसाधनमत्र विशेषः ।

एवमापाततः आकुलत्वभानेऽपि सर्वं सङ्गतमेवेति अवधानवतां प्रतिपत्तिर्भवत्येव । षण्णां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानस्य उद्दिष्टत्वेऽपि द्रव्यगुणकर्मणामेव तद्विशेषेण कुर्वन् तदितरेषां अप्राधान्यं ज्ञापयति । एकस्मिन् सूत्रे

अस्य तन्त्रस्य वैशेषिकमिति यत् प्रसिद्धमभिधानं तत्र निमितभूतं, अत एव स्वस्य प्रतितन्त्रसिद्धान्तभूतमपि विशेषपदार्थं अन्योपसर्जनतया प्रतिपादयन् एकेनैव सूत्रेण समवायं निरूपयंश्च दृष्टिविशेषेण तयोरत्यन्ताप्राधान्यं मन्यत इव ।

"आपो द्रवाः स्निग्धाश्च" इति द्रवत्वस्नेहौ, "शब्दः स्पर्शवतामगुणः" इति शब्दं, "संस्कारादुत्तरं" इति, "संयोगविभागवेगानां कर्म समानम्" इति च वेगसंस्कार, "संस्काराच्च स्मृतिः" इति भावनासंस्कारं, "संयोगाभावे गुरुत्वात् पतनम्" इति गुरुत्वं, "इच्छाद्वेषपूर्विका धर्माधर्मयोः प्रवृत्तिः" इति धर्माधर्मौ चेति सप्त गुणान् अङ्गीकृतान् उपरि ज्ञापयन्नपि आदौ गुणोद्देशसूत्रे इमान् विहाय अन्यान् सप्तदशैव निर्दिशति । तत्र कारणं चिन्तनीयम् । तत्र तत्र, कीर्तनेनैवालम् । न तत्र विशिष्य वक्तव्यं किञ्चिदस्तीत्य-भिप्रायः स्यात् । उपरि निरूपणाय हि प्रथममुद्देशः । निरूपणस्याकर्तव्यत्वे किमर्थमुद्देशः ।

पदार्थानां विभज्य निरूपणे प्रथमप्रवृत्तोऽयं सूत्रकारः स्वोपज्ञेन केनचिन्मार्गेण तत् करोति । धर्मधर्मिविवेकः समीचीनव्यवहारनिदानम् । तत्सिद्धिः अस्य शास्त्रस्य परमं प्रयोजनम् । तत्साधनक्षममिदमित्यत्र नास्ति सन्देहः । द्रव्यस्य गुणकर्माश्रयत्व-मुक्त्वा गुणेषु कर्मसु च गुणकर्माभावं पुनः पुनर्वदन् कणादः स्वकाले जनानां उक्तविषये वलवन्तं व्यामोहं स्थितं, तदपनोदनाय स्वस्य जातं महान्तं सम्भ्रमं च आवेदयति । परमाणूनां जगत्कारणत्वं शब्दप्रमाणस्य अनुमानेऽन्तर्भावं च वदन् अयं वेदान्तिनाम-नादरणीयोऽभवत् । तथापि पदार्थविवेचनव्युत्पत्तिकरत्वात् इदं शास्त्रं आस्तिकैरादृत-मेवासीत् । अत एवास्य अध्ययनाध्यापनसम्प्रदायोऽनुवर्तते । प्रसिद्धा चेयं प्राचामुक्तिः "काणादं पाणिनीयं च सर्वशास्त्रोपकारक" मिति ।

श्रीवीरराघवार्येण धीमता यः परिष्कृतः ।
सूत्रपाठोऽस्मदीयेयं वृत्तिस्तदनुसारिणी ॥

---

# विषयसूची

## प्रथमाध्यायः



## द्वितीयाध्यायः



## तृतीयाध्यायः



## चतुर्थाध्यायः



## पञ्चमाध्यायः



## षष्ठाध्यायः

## सप्तमाध्यायः



## अष्टमाध्यायः



## नवमाध्यायः



## दशमाध्यायः

# वैशेषिकसूत्रवृत्तौ

प्रथमाध्याये प्रथममाह्निकम्

साधर्म्यवैधर्म्यविवेचनेन
पदार्थतत्त्वावगमस्य सिद्ध्यै ।
कृतं कणादेन महर्षिणा यत्
वैशेषिकं तद् विवृणोमि शास्त्रम् ॥

सूत्रकारः स्वसूत्राणां यमर्थमभिसन्दधे ।
तं पश्यति यथा धीर्मे तथा पश्यतु मां हरिः ॥

येऽपि सुकुमारमतय-
स्तेऽप्यक्लेशं कणादसूत्राणाम् ।
भावं बुद्ध्यन्तामिति
वृत्तिमिमां वितनुमः सुगमाम् ॥

—×—

प्रथमाध्याये प्रथममाह्निकम्

**(१) अथातो धर्मं व्याख्यास्यामः**

अथात इति पदद्वयं अर्थरहितं मङ्गलार्थतया शास्त्रारम्भे उच्चार्यते । यद्वा अथ अनन्तरम् । कस्मादनन्तरमित्यपेक्षायां ,व्याख्यानप्रयोजकं यत् पूर्ववृत्तं तस्यानन्तरमिति लभ्यते । तत् पूर्वं वृत्तं येभ्यो व्याख्यानं, तेषां शिष्याणां उपसदनं "भगवन् धर्मं नो व्याख्याहि" इति तत्कृतः प्रश्नश्चेति युक्तम् । ततोऽन्यस्य उपस्थापकाभावात् । एवं च उपसन्नयोग्यशिष्यकृतप्रश्नानन्तर-मित्यथशब्दार्थः । अतः—शिष्यकृतात्प्रश्नादेव हेतोरित्यर्थः । योग्यैः शिष्यैः प्रश्ने कृते हि अभिज्ञैर्दयालुभिराचार्यैः अवश्यमेव उपदेशः कर्तव्यः । "तस्मै

स विद्वानुपसन्नाय सम्यक्" इति शास्त्रात् । तस्मात् प्रश्नो हेतुः । को धर्मः, इत्यनन्तरसूत्रेण वक्ष्यते । व्याख्यास्यामः - -विशदीकरिष्यामः । श्रीः ।

**(२) यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः ।**

अभ्युदयः मोक्षव्यतिरिक्तं ऐहिकं आमुष्मिकं च फलम् । निःश्रेयसं मोक्षः । अनयोः सिद्धिः निष्पत्तिः प्राप्तिः यतः यस्मात् साधनात् भवति, स धर्मः । तत् साधनं धर्मवदवाच्यमित्यर्थः । पुण्यं सुकृतमिति चास्य व्यवहारः ॥२॥ "अभ्युदयनिःश्रेयससिद्धिहेतुर्धर्म" इति वक्तव्ये "यतस्तत्सिद्धिः स धर्मः" इति वचनं तस्य प्रमाणविशेषेण प्रसिद्धिसूचनार्थम् ।

किं तत्प्रमाणं येन तस्य प्रसिद्धिः ? इत्यत्राह :—

**(३) तद्वचनादाम्नायस्य प्रामाण्यम् ।**

इति । तस्य धर्मस्य अभ्युदयनिःश्रेयससाधनभूतस्य वचनात् बोधनात् उपदेशात्, आम्नायस्य वेदस्य, प्रामाण्यं प्रमाणत्वं भवतीति शेषः । आम्नायः प्रमाणमिति सर्वैरास्तिकैरभ्युपगतम् । कस्य प्रमेयस्य प्रमां जनयित्वा स प्रमाणं भवति । न तावत् प्रत्यक्षेणानुमानेन वा अवगतस्य कस्यचित् । प्रमाणान्तरावगतार्थबोधकत्वे केवलमनुवादकत्वापत्तेः प्रमाणत्वासंभवात् । अतः प्रमाणान्तरानवगतार्थबोधकत्वादेव तस्य प्रामाण्यं निर्वाह्यम् ।

प्रमाणान्तरानवगतोऽप्यर्थः प्रमाणान्तरावगतार्थविरुद्धो न भवितुमर्हति । बाधितार्थबोधकत्वेन अप्रामाण्यापत्तेः । अग्निः शीत इति बोधयन् हि आम्नायः अप्रमाणं भवेत् । तस्मात् प्रमाणान्तरेण अनवगतः अबाधितश्च योऽर्थः तद्बोधकत्वादेव आम्नायः प्रमाणं भवति । सोऽर्थः अभ्युदयनिःश्रेयससाधनरूपो धर्म एव ।

आम्नायो हि "ज्योतिष्टोमेन स्वर्गकामो यजेत", "उद्भिदा यजेत पशुकामः" "कारीर्या वृष्टिकामो यजेत", "सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः", "ब्रह्मविदाप्नोति परम्", "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिभिः अभ्युदयसाधनतया

कर्म, निःश्रेयससाधनतया ज्ञानं च बोधयति । न चैतत् केनापि प्रमाणान्तरेणावगतम् । न च बाधितम् । अतः अभ्युदयसाधनभूतकर्मात्मकस्य निःश्रेयससाधनभूत-ज्ञानात्मकस्य च धर्मस्य बोधकत्वात् आम्नायस्य प्रामाण्यम् । तदेवं सर्वैः आस्तिकैः प्रमाणत्वेन परिगृहीतवेदबोधितत्वात् अभ्युदयनिःश्रेयससाधनतया प्रसिद्धो योऽर्थः कर्मज्ञानरूपः स धर्मः । तमिदानीं व्याख्यास्याम इति सूत्र-त्रयार्थः ॥३॥

**(४) धर्मविशेषप्रसूतात् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम् ।**

धर्मस्य विशेषः काचन व्यक्तिः । इदमिति निर्देष्टुमशक्यं इह जन्मनि प्राक्तने वा निष्पन्नं किमपि सुकृतमित्यर्थः । तेन प्रसूतात् उत्पादितात् तत्त्वज्ञानात् । तत्त्वं यथावस्थितं अनारोपितं अकल्पितं रूपम् । तस्य ज्ञानं बोधः तस्मात् । केषां तत्त्वस्य ज्ञानं ? पदार्थानाम् । वस्तूनामित्यर्थः । के ते पदार्थाः ? द्रव्यं, गुणः, कर्म, सामान्यं, विशेषः, समवायः इत्येते । काभ्यां संपन्नात् एषां पदार्थानां तत्त्वज्ञानात् । साधर्म्यवैधर्म्याभ्यां सम्पन्नात् । साधर्म्यं समानधर्मवत्त्वम् । वैधर्म्यं इतरावृत्तिधर्मवत्त्वम् । अनयोर्ज्ञानमिह विवक्षितम् । साधर्म्यज्ञानेन वैधर्म्यज्ञानेन च सम्पन्नं यत् एषां पदार्थानां तत्त्वज्ञानं तस्मादित्यर्थः । पृथिवी रसवत्त्वेन अद्भिः समाना, रूपवत्त्वेन अद्भिः तेजसा च समाना, स्पर्शवत्त्वेन अप्तेजोवायुभिः समाना, अनुष्णाशीतस्पर्शवत्त्वेन अप्तेजोभ्यां असमाना, वायुना समाना च, गन्धवत्त्वेन स्वेतरैः सर्वैः पदार्थैः असमाना, इत्येवं साधर्म्यवैधर्म्यचिन्तया पृथिव्याः यत् तत्त्वं तस्य ज्ञानं संपद्यते । एवमन्यत्रापि, इति द्रष्टव्यम् । ईदृशात् एषां पदार्थानां तत्त्वज्ञानात् निःश्रेयसं मोक्षरूपः परमः पुरुषार्थो भवति ।

अस्मिन् सूत्रे शास्त्रारम्भः । पदार्थानामिति विषयनिर्देशः । द्रव्यगुण-कर्मसामान्यविशेषसमवायानां इति पदार्थविभागः । साधर्म्यवैधर्म्याभ्या-मिति पदार्थनिरूपणप्रकारकथनम् । तत्त्वज्ञानादिति शास्त्रप्रयोजनाभिधानम् ।

धर्मविशेषप्रसूतादिति सुकृतरहितानां दुर्लभत्वज्ञापनद्वारा अस्य तत्त्वज्ञानस्य स्तुतिः। अस्य स्वयं पुरुषार्थत्वाभावात् पुरुषार्थपर्यवसायित्वस्य, तत्रापि उत्तमपुरुषार्थ-पर्यवसायित्वस्य ज्ञापनायोक्तं तत्त्वज्ञानान्निःश्रेयसमिति।

शास्त्रस्य यत् साक्षात् प्रयोजनं द्रव्यादिपदार्थतत्त्वज्ञानं तस्मिञ्जाते नित्यानित्यहिताहितविवेकेन मोक्षे रागः अन्यत्र विरागश्च जायते। ततः मोक्षोपायं परिगृह्णाति, हेयस्य हानोपायं च। ततो निःश्रेयसं प्राप्नोति। अतो महाफलत्वात् अस्य तत्त्वज्ञानस्य तत्प्रयोजनकमिदं शास्त्रं युक्तारम्भ-मिति भावः।

**(५) पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मन इति द्रव्याणि।**

प्रथमपदार्थस्य द्रव्यस्यायं नवधा विभागः। अत्र आकाशान्तानि पञ्चभूतानि। रूपं रसः स्पर्शः गन्धः इति चतुर्गुणायाः पृथिव्याः प्रथमं निर्देशः। गन्धवर्जं त्रिगुणानामपां ततः। गन्धरसवर्जं द्विगुणस्य तेजसः ततः परम्। गन्धरसरूपवर्जं स्पर्शैकगुणस्य वायोरनन्तरम्। गुणचतुष्टयेनापि रहितस्य शब्दात्मकविशेषगुणान्तरवतः आकाशस्य ततः परम्। आकाशवद्विभुत्वा-न्नित्यत्वाज्जडत्वाच्च अनन्तरं कालो निर्दिश्यते। कालपरिच्छेदकतया कालत्वेनैव व्यवह्रियमाणपरिस्पन्दवता सूर्येणैव स्वोदयास्तमयाभ्यां निरूपणीयविशेषा दिक् ततः परम्। अथ अजड आत्मा। तदुपकरणं अन्ते।

पूर्वं विभागस्याभिप्रेतत्वेऽपि आर्थिकत्वेन साक्षात् अचिकीर्षितत्वात् पदार्थविशेषणतया द्रव्यादीनां समासेन निर्देशः। इह तु विभागस्यैव साक्षात् चिकीर्षितत्वात् असमासः। इतिकारार्थं च। इति द्रव्याणि-इत्येतावन्त्येव। इतोऽधिकं द्रव्यं किमपि नास्ति। इति सूत्रकारोऽत्र व्यवच्छेदं चिकीर्षन् इतिपदं प्रयुङ्क्ते। मनांसि द्रव्याणि, इति समासे सति तद्घटनं न शोभायै ॥५॥

**(६) रूपरसगन्धस्पर्शाः सङ्ख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नश्च गुणाः ॥**

द्वितीयपदार्थो गुणो विभज्यते । रूपादयश्चत्वारो भूतमात्रगुणाः । बुद्धयादयः षट् आत्ममात्रगुणाः । अत्र सप्तदश गुणाः कण्ठोक्ताः । स्नेहशब्द-गुरुत्वद्रवत्वधर्माधर्मसंस्काराः सप्त अनुक्ताः चकारेण समुच्चीयन्ते । उपरि तत्रतत्र सूत्रकृतैव वक्ष्यमाणत्वात् । अन्यदत्र विस्तरभिया न लिख्यते । ॥६॥

**(७) उत्क्षेपणमपक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्माणि ।**

तृतीयपदार्थः कर्म विभज्यते । उत्क्षेपणं-कस्यचिद्वस्तुनः ऊर्ध्वदेशसंयोगानुकूलो व्यापारः । अवक्षेपणं-कस्यचिद्वस्तुनः अधोदेशसंयोगानुकूलो व्यापारः । आकुञ्चनं-कस्यचिद् वस्तुनः अग्रभागस्य मूलभागसामीप्यानुकूलो व्यापारः । प्रसारणं-कस्यचिद्वस्तुनः अग्रभागस्य मूलभागात् विप्रकर्षानुकूलो व्यापारः । शरीरसन्निकृष्टसंयोगहेतुराकुञ्चनम् । शरीरविप्रकृष्टसंयोगहेतुः प्रसारणम् इति केचित् । वक्रतासंपादकं कर्म आकुञ्चनम् । ऋजुतासंपादकं कर्म प्रसारणमित्यपरे । एवमिमानि चत्वारि सकर्मक-क्रियारूपाणि । गमनं कस्यचित् तादृशो व्यापारः येन स्वस्य स्वावस्थानदेशात् देशान्तरसंयोगो जायते । इयमकर्मिका क्रिया । ननु चक्रं भ्रमति । तत् कुलालः भ्रमयति । अस्य कुलालव्यापारस्य कुत्रान्तर्भावः ? न हि सः उत्क्षेपणादिषु पञ्चसु कर्मसु अन्यतमं भवति। उच्यते । पञ्चभ्योऽतिरिक्तमेवेदं कर्म । तर्हि पञ्चधा विभागानुपपत्तिरिति चेत्, नात्र तथा विभाग इष्यते । इतिशब्दस्य प्रकारार्थत्वात् । इति-एवम्प्रकाराणि कर्माणि इत्यर्थात् । ॥७॥

**(८) सदनित्यं द्रव्यवत् कार्यं कारणं सामान्यविशेषवदिति द्रव्यगुण-कर्मणामविशेषः ।**

उक्तानां द्रव्यगुणकर्मणां त्रयाणां पदार्थानां साधर्म्यमुच्यते ।

अविशेषः-विशेषः असाधारणधर्मः, तद्भिन्नः अविशेषः साधारणधर्मः, साधर्म्यम् । द्रव्यगुणकर्मणां सदिति अविशेषः । सदिति पदेन व्यवह्रियमाणं सत्ताजातिमत्त्वं साधर्म्यम् साधारणधर्म इत्यर्थः । सत्ताजातिः द्रव्यगुणकर्मसु त्रिष्वेव पदार्थेषु वर्तते, नान्येषु । अतः इयं त्रयाणामेषां साधारणधर्मः । अनित्यमित्य-परः अविशेषः । अनित्यत्वं उत्पत्तिविनाशवत्त्वम् । इदमेव प्रागभावप्रतियोगित्वे सति प्रध्वंसाभावप्रतियोगित्वमित्युच्यते । घटादीनां कार्यद्रव्याणां, पाकजादीनां रूपादीनां संयोगादीनां च गुणानां, सर्वेषां च कर्मणामनित्यत्वात् अयमेषां साधारणधर्मः ।

द्रव्यवत्त्वमन्योऽविशेषः । यस्य द्रव्यं समवायिकारणं तद् द्रव्यवत् । द्रव्यसम-वायिकारणकमित्यर्थः । तथात्वं एषां साधर्म्यम् । घटादीनां द्रव्याणां कपालादिरूपं द्रव्यं समवायिकारणम् । घठादिसमवेतानां रूपादीनां गुणानां कर्मणां च घटादि-द्रव्यं समवायिकारणम् ।

अतो द्रव्यवत्त्वं त्रयाणाम् । कार्यत्वं च । घटादीनां द्रव्याणां पाकजरूपादीनां संयोगादीनां च गुणानां, सर्वेषां कर्मणां च कार्यत्वात् । प्रागभावप्रतियोगित्वं कार्य-त्वम् । कारणत्वं च । कपालादीनां द्रव्याणां घटादिकं प्रति, तन्तुसंयोगादीनां गुणानां पटादिकं प्रति, कर्मणां संयोगविभागादिकं प्रति च कारणत्वात् । सामान्यविशेषवत्त्वं च । सामान्यं जातिः । तस्या विशेषः अवान्तरभेदः द्रव्यत्वादिः । द्रव्येषु द्रव्यत्वस्य, गुणेषु गुणत्वस्य, कर्मसु कर्मत्वस्य च विद्यमानत्वात् एषां सामान्यविशेषवत्त्वम् ॥८॥

**(९) द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्यम् ।**

**(१०) द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम् ॥**

द्रव्यगुणकर्मणां त्रयाणां पदार्थानां साधर्म्यमुक्तम् । अथाद्य द्रव्यगुणयोर्द्वयोराह । अनयोः सजातीयारम्भकत्वं साधर्म्यम् । किमिदं सजातीयारम्भकत्वं ? तद्विवृणोति सूत्रान्तरेण । सजातीयं स्वमात्रवृत्ति जातिमत् वस्तु । तदारम्भकत्वं तदुत्पादकत्वम् । द्रव्यस्य स्वमात्रवृत्तिर्जातिः द्रव्यत्वम् । तद्वत् तस्य सजातीयम् । तदुत्पादकं द्रव्यम् ।

यथा तन्त्वात्मकानि द्रव्याणि पटात्मकं द्रव्यान्तरं उत्पादयन्ति। तन्तुरूपात्मका गुणाश्च पटान्तरात्मकं गुणान्तरमुत्पादयन्ति। एवं द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्यम्।

अत्र तन्त्वपेक्षया तदारब्धः पटः द्रव्यान्तरम्। न तु तन्तव एव पटः। तन्तुरूपापेक्षया पटरूपं गुणान्तरम्। न तु तन्तुरूपमेव पटरूपम् इत्यपि ज्ञापितम् ॥९-१०॥

**(११) भविष्यति पट इत्युपक्रियमाणेभ्यस्तन्तुभ्यः।**

तन्तुभ्यः इति पञ्चमी। उपक्रियमाणेभ्यः तन्तुवायेन तुरीवेमादिनिमित्तकारणकलापसम्भरणेन तत्सहिततया क्रियमाणेभ्यः तन्तुभ्यः हेतुभूतेभ्यः पटः भविष्यति उत्पत्स्यते इति प्रतीतिव्यवहारौ भवत इति शेषः।

तन्तुभ्यः पटस्यातिरिक्तत्वे युक्तिरियम्। न हि तन्तुषु भविष्यत्वप्रतीतिव्यवहारौ घटेते। तेषां विद्यमानत्वात् ॥११॥

**(१२) तथाभवतीति सापेक्षेभ्यो निरपेक्षेभ्यश्च।**

यथा पटो भविष्यतीति प्रतीतिव्यवहारौ तथा भवतीत्यपि प्रतीतिव्यवहारौ भवतः। केभ्यः। सापेक्षेभ्यो निरपेक्षेभ्यश्च। तन्तुभ्य इति पूर्वसूत्रादनुषज्यते। सापेक्षेभ्यः तन्त्वन्तरसंयुक्तेभ्यः। संयुक्तत्वावस्थायां स्वस्थितौ एकस्य तन्तोः अपरतन्त्वपेक्षायाः सत्वात् सापेक्षत्वम्। निरपेक्षेभ्यः तन्त्वन्तरसयोगरहितेभ्यः। असंयोगावस्थायां पृथक्स्थितानां तन्तूनां स्वस्थितौ तन्त्वन्तरापेक्षाविरहात् निरपेक्षत्वम्। पटारंभाय तन्त्वन्तरसंयोगसापेक्षत्वात् असंयुक्तास्तन्तवः सापेक्षाः। तन्निरपेक्षत्वात् संयुक्तास्तन्तवो निरपेक्षा इत्यन्ये। वयनोपक्रमात् परं समाप्तेः पूर्वं तन्तवः मिथः संयुक्ताः असंयुक्ताश्च भवन्ति। तस्यामवस्थायां तान् पश्यतां पटो भवति उत्पद्यते इति प्रतीतिव्यवहारौ भवतः, इत्यर्थः।

इयमन्या युक्तिः। तन्तूनामेव पटत्वे एवं प्रतीतिव्यवहारौ नोपपद्येते। तेषां चिरात्पूर्वमुत्पन्नत्वात्। इदानीमुत्पद्यमानत्वाभावात्। ननु "तथा अभूदिति निष्पन्नसर्वसंयोगेभ्यः" इत्यपि युक्तं सूत्रयितुमिति चेन्न। उत्पन्नत्वस्य पट इव तन्तुष्वपि

अन्वयेन बाधविरहात् । अथ अभूत् अद्योत्पन्नमित्यर्थः । अतो न तन्तुष्वन्वयः । तेषां चिरात्पूर्वमुत्पन्नत्वेन अद्योत्पन्नत्वाभावात्, इति चेत् न, एवं समर्थनीययुक्त्युपन्यासस्य सूत्रकारानभिमतत्वात् ।

एवं तन्तुभ्योऽतिरिक्ततया पटस्य, द्रव्यस्य द्रव्यान्तरारम्भकत्वं उपपन्नमिति दर्शितम् । पटस्य तन्तुभ्योऽन्यत्वे सिद्धे पटरूपस्य तन्तुरूपान्यत्वं सिद्धमेवेति गुणस्य गुणान्तरारम्भकत्वमपि सिद्धयति ॥१२॥

**(१३) कर्म कर्मसाध्यं न विद्यते ।**

द्रव्यगुणयोर्द्वयोरेव सजातीयारम्भकत्वं साधर्म्यमुक्तम् । कर्मणः तत् कुतो नोच्यते ? इत्यत्राह—कर्मेति । कर्मजन्यं कर्म नास्ति । तत्सत्वे हि सजातीयारम्भकत्वं कर्मणो भवेत् । तदभावात् इदं नास्ति । तस्मान्नोच्यत इति ॥१३॥

**(१४) न द्रव्यं कार्यं कारणं च वधति ।**

द्रव्यमिति द्वितीया । कार्यं कारणमिति प्रथमा । वधतीति हन्तीत्यर्थे आर्षं रूपम् । कार्यं कारणं च (कर्तृ) द्रव्यं (कर्म) न वधति न नाशयति । द्रव्यस्य स्वकार्येण वा स्वकारणेन वा नाशो नास्तीत्यर्थः ॥१४॥

**(१५) उभयथा गुणाः ।**

गुणाः उभयथा स्वकार्यनाश्याश्च स्वकारणनाश्याश्च भवन्ति । शब्दपरम्परायां पूर्वशब्दकार्येण उत्तरशब्देन पूर्वशब्दस्य नाशः । उपान्त्येन शब्देन अन्त्यशब्दकारणेन अन्त्यशब्दस्य नाशः । अतः उभयनाश्यत्वम् ॥

**(१६) कार्यविरोधि कर्म ।**

कार्यस्य विरोधि तस्मिन्नुत्पन्ने स्थित्यनर्हम् । तेन नाश्यमित्यर्थः । कर्म कार्यनाश्यमित्युक्तं भवति । कर्मणः कार्यं उत्तरदेशसंयोगः । तेन कर्मणो नाशो भवति ।

न द्रव्यमित्यादिना सूत्रत्रयेण "द्रव्यं कार्यनाश्यत्वाभावकारणनाश्यत्वाभावोभयवत् । गुणः कार्यनाश्यत्वकारणनाश्यत्वोभयवान् । कर्म कार्यनाश्यत्वमात्रवत् ।"

# भूमिका

न्यायवैशेषिके, साङ्ख्ययोगौ, पूर्वोत्तरमीमांसे इति षड्दर्शनी प्रसिद्धा। तस्यां वैशेषिकं प्राचीनतममिति तत्स्वरूपं परिशीलयतां धीमतां निश्चयो न न भवेदित्यस्माकं दृढा मतिः। न्यायवैशेषिके इत्यत्राल्पाच्तरत्वात् न्यायशब्दस्य पूर्वनिपातः। न तु तस्य दर्शनस्य एतदपेक्षया कालतः प्राचीनत्वात्।

कणाद इति किं दर्शनप्रवर्तकस्य महर्षेः पितृकृतं रूढं नाम अथवा निमित्तविशेषाज्जातमिति न निश्चित्य किमपि वक्तुं शक्यते। औलूक्यमित्यपि दर्शनमिदं व्यवह्रियते। तत्रापि हेतोरध्यवसानं दुष्करम्। महर्षिरयं दर्शनकारेभ्योऽन्येभ्यः सर्वेभ्यः प्राचीन इत्येतावन्मात्रमवगम्यते। न त्विदन्तया तज्जीवनकालः। बुद्धादप्ययं प्राचीन इति ग्रन्थकालचिन्तकाः सर्वे सम्प्रतिपन्नाः।

सूत्रात्माऽयं ग्रन्थः दशाध्यायीमयः। प्रत्यध्यायं द्वे आह्निके। शासनात् पदार्थतत्त्वबोधनात् शास्त्रमिदं भवति। पदार्थाः सत्यानि वस्तूनि। ते अस्य शास्त्रस्य विषयाः। कति, के ते, किंस्वभावा इति तेषां विविच्य निरूपणमिह क्रियते। ते सप्त-द्रव्यं गुणः कर्म सामान्यं विशेषः समवायः अभावः इति। एषु द्रव्यादीन् षडेव पदार्थान् प्रथमं निर्दिश्य तेषां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानं सम्पाद्यं ज्ञापयति। प्रथमं निर्देशं विना अभावपदार्थं प्रत्यक्षज्ञानप्रकरणे नवमाध्याये निरूपयति। एवंकरणेन प्रथमं भावाभावरूपेण पदार्थो द्विविधः, तत्र भावः षड्विध इति पदार्थविभागे विशेषं ज्ञापयति।

अस्मिन् शास्त्रे क्रियमाणं विषयाणां निरूपणं आकुलं सङ्गतिहीनं प्रौढशास्त्रोचितप्रक्रियाशून्यं, असारं, पुनरुक्तं, बहुषु स्थलेषु दुर्ग्रहं च सत्यं भाति। उक्तवन्तश्च केचित्–

अतिविरसमसारं मानवार्ताविहीनं
प्रविततबहुवेलप्रक्रियाजालदुःखम्।
... ... ... ...
दुर्वाधिसममतन्त्रं तन्त्रमेतद्वदन्ति॥ इति।

**(१९) एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति कर्मलक्षणम् ।**

एकमेव द्रव्यं समवायिकारणं यस्य तत् एकद्रव्यम् । पटादीनि अवयविद्रव्याणि समवायिकारणभूतेषु बहुषु अवयवेषु व्यासज्य वर्तन्ते । तथा द्वित्वादयः संख्याः संयोगादयश्च अनेकत्र । तथा न कर्म । एकस्मिन्नेव स्वसमवायिकारणभूते द्रव्ये वर्तते सर्वं कर्म । अनेकवृत्ति सजातीयवन्तौ द्रव्यगुणौ अतथाभूतं कर्मेति इदमस्य तदुभयापेक्षया वैधर्म्यम् ।

अगुणं गुणशून्यम् । पूर्वं अगुण इत्युक्ते नञ्तत्पुरुषभ्रान्तिर्भवेदिति तत्परिहाराय अगुणवानित्युक्तम् । अत्र तु लिङ्गेन बहुव्रीहित्वनिश्चयात् न तथा भ्रान्तिप्रसङ्ग इति अगुणमित्येवोक्तं, न तु अगुणवदिति ।

पदार्थत्रये गुणवदिति द्रव्यलक्षणकथनेन इतरयोः गुणरहितत्वं द्रव्यापेक्षया वैधर्म्यमिति अन्योन्यापेक्षया साधर्म्यमिति च व्यञ्जितम् । अत्र एकद्रव्यमगुणमित्युक्त्या "एकद्रव्यत्वे सति अगुणत्वं कर्मणो गुणापेक्षया वैधर्म्यं, एकद्रव्यभिन्नत्वे सति अगुणत्वं कर्मापेक्षया गुणस्य वैधर्म्यम्" इति ज्ञापितं भवति ।

संयोगविभागेषु—संयोगान् प्रति विभागान् प्रति च । न विद्यते अपेक्षा यस्य तत् अनपेक्षम् । तच्च तत् कारणं च अनपेक्षकारणम् । अपेक्षा समवायसंबन्धेन कारणान्तरस्य । तथाच समवायसंबन्धेन कारणान्तरनिरपेक्षं संयोगविभागकारणं यत् तत्कर्मेति कर्मलक्षणम् । कर्मणा विभागः, पूर्वदेशसंयोगनाशः, उत्तरदेशसंयोगश्च जायते । तत्र विभागस्य पूर्वदेशसंयोगनाशं प्रति कारणत्वं, न तूत्तरदेशसंयोगं प्रत्यपि । कुलालपितुर्घटं प्रतीव अन्यथासिद्धत्वात् । पूर्वदेशसंयोगनाशस्य कारणत्वेऽपि समवायसंबन्धेन कारणत्वाभावात् न कर्मणोऽनपेक्षत्वभङ्गः । एतेन संयोगोत्पत्तौ समवायिकारणद्रव्यसापेक्षत्वात् कर्मणो निरपेक्षत्वं नास्तीति प्रत्युक्तम् । समवायिकारणस्य तादात्म्यसंबन्धेनैव कारणत्वात् । समवायसंबन्धेन कारणत्वाभावात् ।

संयोगविभागकारणत्वमात्रस्य लक्षणत्वे द्रव्ये संयोगविभागसमवायिकारणेऽतिव्याप्तिः स्यात् । अतोऽनपेक्षकारणत्वोक्तिः । द्रव्यस्य कर्मसापेक्षत्वादतिव्याप्तिवारणम् । अनपेक्षकारणत्वं च समवायसंबन्धेन विवक्षितम् । अतः अवयविसंयोगं

इत्थं द्रव्यनिरूपणतत्परं द्वितीयाद्यध्यायत्रयम् । एतदनन्तरं निर्देशक्रमेण गुणनिरूपणे कर्तव्येऽपि भोक्तुरात्मनः, भोग्यानां विषयाणां, भोगोपकरणानां शरीरेन्द्रियाणां च निरूपणे कृते भोगहेतोः तद्व्यवस्थापकस्य च पुण्यपापरूपस्य कर्मणः तद्द्वारा कर्मसामान्यस्य च उपस्थित्या तन्निरूपणं पञ्चमषष्ठाभ्यां क्रियते । अत्र लौकिकवैदिकभेदेन कर्मविभागमभिप्रेत्य अध्यायभेदकल्पनम् ।

अनन्तरं सप्तमप्रभृति दशमान्तं अध्यायचतुष्टयं गुणनिरूपणपरम् । तत्र सप्तमाद्ये रूपादयश्चत्वारो गुणाः परिमाणं च विषयीभवन्ति । द्वितीये सङ्ख्यापृथक्त्वे, संयोगविभागौ परत्वापरत्वे च । अत्र संयोगेन शब्दार्थयोस्तदभावोपस्थापनद्वारा तत्सम्बन्धोपस्थापनात् तन्निरूपणं संयोगविभागनिरूपणानन्तरं क्रियते । अत्रान्ते इहेदमिति आधाराधेयभावव्यवस्थापकस्य समवायसम्बन्धरूपस्य षष्ठपदार्थस्य लक्षणादिकमुच्यते । अष्टमे नवमे च बुद्धिनिरूपणम् । तत्र विशिष्टप्रत्यक्षस्य सकारणस्य अष्टमाद्ये । विशिष्टप्रत्ययवत् बुद्ध्यपेक्षः शाब्दव्यवहारः इन्द्रियार्थसन्निकर्षेत्येतद्घटकार्थशब्दार्थः,इन्द्रियाणां प्रकृतिश्च द्वितीये ।

बाह्यभावप्रत्यक्षेतरप्रत्यक्षं नवमाद्ये । प्रत्यक्षप्रकरणे तद्विषयतया असदिति धर्मिप्राधान्येन च अभावं निरूपयन् उद्देशसूत्रे अनिर्देशेन ज्ञापितं तस्याप्राधान्यमत्र द्रढयति । प्रत्यक्षेतरबुद्धिनिरूपणं द्वितीये । एतेन बाह्यभावप्रत्यक्षातिरिक्तज्ञाननिरूपणं नवमाध्यायकृत्यमिति फलति ।

सुखदुःखविषयं दशमस्य आद्यमाह्निकम् । इच्छाद्वेषप्रयत्नानां पञ्चमषष्ठयोः प्रसिद्धवद् व्यवहारेण तेषु विशेषेण निरूपणीयं नास्तीति मत्या तन्निरूपणात् उदास्तेति भाति । द्वितीये कारणत्रैविध्यं निरूप्य यथोपक्रमं धर्मस्य आम्नायप्रामाण्यस्य च कीर्तनेन शास्त्रमुपसंह्रियते । ऋषिपदाभिधानेन ईश्वरसाधनमत्र विशेषः ।

एवमापाततः आकुलत्वभानेऽपि सर्वं सङ्गतमेवेति अवधानवतां प्रतिपत्तिर्भवत्येव । षण्णां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानस्य उद्दिष्टत्वेऽपि द्रव्यगुणकर्मणामेव तद्विशेषेण कुर्वन् तदितरेषां अप्राधान्यं ज्ञापयति । एकस्मिन् सूत्रे

**(२४) गुणवैधर्म्यान्न कर्मणां कर्म ।**

कर्मणां कर्म समानं कारणं न भवति । कस्मात् । गुणवैधर्म्यात् । स्यन्दन-कारणं द्रवत्वरूपो गुणः । पतनकारणं गुरुत्वगुणः । चेष्टाकारणं प्रयत्नगुणः । अत्र सर्वत्र तत्तत्क्रियोत्पत्तेः पूर्वं स स गुणः वर्तते । तत्तत्कार्यनियतपूर्ववृत्तित्वात् कारणं भवति । न त्वेवं कर्मोत्पत्तेः पूर्वं किमपि कर्म वर्तते । उत्तरदेशसंयोगे उत्पन्ने तज्जनकं कर्म नश्यति । नष्टं अविद्यमानं तत् कथं अन्यत्कर्म जनयेत् । अतो नियत-पूर्ववृत्तिभ्यो गुणेभ्यः नियतपूर्वनाशतया विलक्षणं कर्म कर्मणां कारणं न भवति । इदमभिप्रेत्यैव पूर्वमुक्तं "कर्म कर्मसाध्यं न विद्यते" इति ।

ननु संयोगजसंयोगवत् कर्मजं कर्म कुतो न भवतीति चेन्न, हस्तपुस्तकसंयोगे सति पुस्तकसंयुक्तः कायः इत्यपि व्यवहारस्य सत्त्वात् तस्य मुख्यत्वोपपत्तये संयोगज-संयोगोऽङ्गीक्रियते । हस्तचलने सति कायश्चलति इति व्यवहारस्य मुख्यत्वं न शक्य-मुपपादयितुम् । हस्तसंयोगादतिरिक्तस्य कायसंयोगस्येव हस्तचलनातिरिक्तस्य कायचलनस्य दुर्वचत्वात् । चलनं हि क्रिया जाता विभागं, पूर्वसंयोगनाशं, संयोगान्तरं च अवश्यं जनयेत् । अन्यथा क्रियात्वस्यैवासंभवात् । न च हस्तचलनजनितविभा-गाद्यपेक्षया व्यतिरिक्तं कायचलनजनितं विभागादिकं किञ्चित्सुवचम् । अतो न संयोगजसंयोगवत् कर्मजं कर्म शक्यमङ्गीकर्तुम् । कायश्चलतीति प्रतीतिः अवयवे अवयविशब्दप्रयोग इति औपचारिक्येव ॥२४॥

**२५. द्रव्याणां द्रव्यं कार्यं सामान्यम् ।**

द्रव्यगुणकर्मणाँ कारणभावेन साधारणत्वतदभावौ पञ्चभिः सूत्रैरुक्तौ । अथ इतः प्रभृति तेषामेव कार्यभावेन साधारणत्वमाह । कार्यभावोऽपि अनेककारण-निरूपित इह अभिप्रेतः । कपालद्वयस्य घटरूपमेकं कार्यं समानम् । तन्तूनां बहूनामेकः पटः । तदत्र अनेकद्रव्यविषये द्रव्यरूपमेकं कार्यं समानमित्युक्तम् ॥२५॥

**२६. द्वित्वप्रभृतयः संख्याः पृथक्त्वसंयोगविभागाश्च ।**

अनेकद्रव्याणाँ एते गुणाः कार्यभावेन समानाः । द्वित्वप्रभृतयः—एकत्व व्यतिरिक्ताः । अनेकघटसत्त्व एव हि द्वित्वादिसंख्या जायन्ते । पृथक्त्वं एकपृथक्त्वप्रभृति

सर्वम् । यतः घटान्तरसत्त्व एव अयं तस्मात् पृथगिति प्रतीतिव्यवहारौ भवतः। एकस्यैव घटस्य समवायिकारणत्वेऽपि स्वतन्त्रान्वयव्यतिरेकशालित्वात् घटान्तरस्यापि कारणत्वं वाच्यमेव । तत्तु निमित्तकारणत्वम् । अथापि अनेकघटकारणकत्वमक्षतम् । न च एकत्वस्येव एकपृथक्त्वस्य स्वभावसिद्धत्वात् न कारणापेक्षेति वाच्यम् । तथा सति घटः शुक्लः एक इति घटान्तरादिवस्त्वन्तरनिरपेक्षप्रतीतिव्यवहारवत् पृथगित्यपि तदापत्तेः । न च सूत्रकारः स्वाभिप्रायं एवं क्वचित्प्रकाशयति। प्रत्युत अस्मिन् सूत्रे संयोगादिभिः सह अविशेषेण पृथक्त्वपाठात् सर्वं पृथक्त्वं तदा तदा उत्पद्यत इति ज्ञापयति ।

संयोगस्य द्रव्यद्वयनिष्ठत्वात् सः अनेकद्रव्यस्य एकं कार्यं समानम् । एवं विभागोऽपि द्रव्यद्वयस्य समानं कार्यम् । संयुक्तयोरेव विभागात् ॥२६॥

**(२७) असमवायात् सामान्यकार्यं कर्म न विद्यते ।**

अनेकद्रव्यस्य यथा द्रव्यं गुणश्च उक्तरीत्या समानं कार्यं तथा कर्म न भवति । कस्मात् ? कर्मणः एकद्रव्यमात्रवृत्तित्वात् । अनेकद्रव्ये समवायाभावात्, अवर्तमानत्वात् ।

**(२८) संयोगानां द्रव्यम् ।**

अथानेकस्य गुणस्य सामान्यं कार्यमाह । कार्यं सामान्यमित्यनुवर्तते । संयोगानां तन्तुगतानां बहूनां पटरूपं एकं द्रव्यं समानं कार्यम् ॥२८॥

**(२९) रूपाणां रूपम् ।**

तन्तुगतानां बहूनां रूपाणां एकं सामान्यं कार्यं पटगतं एकं रूपम् । पूर्वं द्रव्यस्य समानकार्यत्वमुक्तम् । अत्र गुणस्य ॥२९॥

**(३०) गुरुत्वप्रयत्नसंयोगानामुत्क्षेपणम् ।**

उत्क्षिप्यमाणवस्तुगतं गुरुत्वं, उत्क्षेप्तुः प्रयत्नः, वस्तुनः उत्क्षेप्तृहस्तसंयोगः, इत्येषां गुणानां एकमुत्क्षेपणात्मकं कर्म समानं कार्यम् । अत्र कर्मणः समानकार्यत्वमुच्यते ॥३०॥

**(३१) संयोगविभागाश्च कर्मणाम् ।**

द्रव्याणां गुणानां च समानं कार्यमुक्तम् । अद्य कर्मणां समानं कार्यमाह । कारणानेकत्वप्रकरणात् कर्मणामित्यनेन संयुज्यमानयोर्वियुज्यमानयोर्वा उभयोः कर्माणि गृह्यन्ते । तेषां संयोगा विभागाश्च समानकार्यभूताः ॥३१॥

**(३२) कारणसामान्ये द्रव्यकर्मणां कर्माकारणमुक्तम् ।**

ननु "संयोगविभागाश्च कर्मणा"मिति पूर्वसूत्रे कर्मणां संयोगविभागरूप-गुणमात्रं समानं कार्यमुक्तम् । द्रव्याणां यथा द्रव्यं गुणश्चेति द्वयं गुणानां च यथा द्रव्यं गुणः कर्म चेति त्रयं समानं कार्यमुक्तं तथा कर्मणां कुतो नोच्यते इति शङ्का-परिहाराय पूर्वोक्तं स्मारयति—**कारणसामान्य** इति ।

कारणसामान्ये । कारणं सामान्यमिति यत्रोक्तं तत्प्रकरणमिह कारणसामान्य-पदेनाभिधीयते । तत्र "न द्रव्याणां कर्म" इति कर्म द्रव्यकारणं न भवतीत्युक्तम् । "गुणवैधर्म्यान्न कर्मणां कर्म" इति कर्मकारणं न भवतीति च । इत्थं द्रव्यकर्मणी प्रति कर्म न कारणमित्युक्तत्वात् द्रव्यकर्मणी कर्मणः कार्ये न भवत इत्यप्युक्तप्रायम् । तथा च कर्मणां द्रव्यं कर्म वा यस्मान्न कार्यं भवति तस्मात् कर्मणः द्रव्यं कर्म वा किञ्चित् समानं कार्यं भवतीति वचनस्य नास्त्यवसरः । अतो नोच्यत इति भावः ।

अस्मिन् आह्निके द्वात्रिंशत् सूत्राणि । तत्र आद्यानि त्रीणि औपोद्घातिकं धर्म-विषयं एकं प्रकरणं भवन्ति । चतुर्थमेकं शास्त्रस्य विषयप्रयोजननिर्देशपरं द्वितीयं प्रकरणम् । पञ्चमषष्ठसप्तमानि आद्यत्रिपदार्थीविभजनपरं तृतीयम् । अष्टमात्प्रभृति पञ्चविंशतिः सूत्राणि द्रव्यगुणकर्मणां साधर्म्यवैधर्म्यनिरूपणाय प्रवृत्तमेकं महा-प्रकरणम् ।

तत्र अष्टमं त्रयाणां साधर्म्यमाह । नवमदशमे द्रव्यगुणयोः साधर्म्यमाहतुः । इदमनयोः साधर्म्यं कर्मापेक्षया अनयोर्वैधर्म्यमपि भवति । एकादशद्वादशसूत्रे अवयविनो द्रव्यान्तरत्वं समर्थयती पूर्वसूत्रयोः शेषतां गच्छतः । त्रयोदशं सूत्रं कर्मणः सजातीया-नारम्भकत्वेन द्रव्यगुणापेक्षया वैधर्म्यं ब्रूते । एवमियं षट्सूत्री त्रयाणां पदार्थानां नाश्य-नाशकभावेतरधर्मैः साधर्म्यवैधर्म्यकथनतत्परा एकमवान्तरप्रकरणम् ।

चतुर्दशादीनि त्रीणि सूत्राणि नाश्यनाशकभावपुरस्कारेण त्रयाणां साधर्म्य-वैधर्म्ये प्रतिपादयन्ति । सजातीयारम्भकत्वं हि पूर्वं प्रस्तुतम् । तेनोपस्थितं नाशकत्व-मनन्तरं तन्त्रीक्रियते । इदमपरमवान्तरप्रकरणम् ।

सप्तदशप्रभृतीनि त्रीणि त्रयाणां पदार्थानां लक्षणकथनपराणि । लक्षणं अति-व्याप्तिरहितत्वेन इतरपदार्थापेक्षया वैधर्म्यं भवति । अव्याप्तिरहितत्वेन सजातीय-सर्वापेक्षया साधर्म्यं भवति ।

विंशप्रभृतिभिः पञ्चभिः सूत्रैः द्रव्यगुणकर्माणि एषामेव कारणभावेन साधर्म्य-वैधर्म्यरूपाणि भवन्तीत्युच्यते । इदमन्यदवान्तरप्रकरणम् । एषामेव कार्यभावेन साधर्म्यवैधर्म्यात्मकत्वप्रतिपादकं पञ्चविंशादारभ्य अष्टसूत्रात्मकं अंतिममवान्तर-प्रकरणम् । एवमुत्तरत्र सर्वत्र प्रकरणविभागो द्रष्टव्यः ॥

इति कणाद सूत्रवृत्तौ सुगमायां
प्रथमाध्यायस्य प्रथममाह्निकम् ॥

---

## प्रथमाध्याये द्वितीयाह्निकम् ।

**(३३) कारणाभावात् कार्याभावः ।१**

द्रव्यगुणकर्माणि साधर्म्यवैधर्म्याभ्यां निरूपितानि । अथ सामान्यं निरूपणीयम् । तत्र सामान्यसत्त्वे किं प्रमाणं इति चेत् । तद्वक्तव्यम् । तत्र प्रत्यक्षमेव प्रमाणमिति सुवचम् । घटदर्शने हि अयं सन्, इदं द्रव्यं, इयं पृथिवी, अयं घटः, इति चाक्षुषं प्रत्यक्षं जायते । तथापि द्रव्यगुणातिरिक्तं सामान्यमिति किं नाम तत्रोपलभ्यते इत्याक्षिपन्तं प्रति इदमिति निर्दिश्य तत्प्रदर्शनं न शक्यते कर्तुम् । अतस्तस्य अनुमानं प्रमाणं प्रदर्शनीयम् । तत्र प्रथमं व्याप्तिं प्रदर्शयति अनेन सूत्रेण । कार्याभावः कारणाभाव-प्रयुक्तः इति सूत्रस्याक्षरार्थः । तेन यत्र कारणाभाव तत्र कार्याभाव इति व्यतिरेक-व्याप्तिः प्रदर्शिता भवति । यत्र कार्यं तत्र कारणमिति अन्वयव्याप्तिश्च अर्थलभ्या । द्रव्यं सत्, गुणः सन्, कर्म सत्, इत्यनुगताकारा प्रतीतिर्भवति । न चेयं बाधिता । अतः

प्रमासत्ताविषयेयं प्रतीतिः। कार्या च, चक्षुर्जन्यत्वात्। प्रतीतौ च विषयः कारणम्। न हि विषयं विना प्रतीतिर्भवितुमर्हति। तथा च अनुगतप्रतीत्यात्मककार्यरूपलिङ्गात् कारणं सामान्यमनुमीयते, इत्युक्तं भवति।

**(३४) न तु कार्याभावात् कारणाभावः ॥२**

कार्यं व्याप्यं, कारणं व्यापकमिति कृत्वा पूर्वसूत्रोक्ता व्याप्तिः समीचीना। तन्मूलकमनुम नं च। एतद्विवेकाय कारणं व्याप्यं, कार्यं व्यापकमिति कृत्वा गृह्यमाणा तु व्याप्तिः दुष्टा, तन्मूलमनुमानं च दुष्टमिति अनेन सूत्रेण बोध्यते। कार्याभावप्रयुक्तः कारणाभाव इति तु न संभवति। घटानुत्पत्तावपि दण्डस्य सम्भवात्। प्रतीतिविरहेऽपि भूम्यन्तर्गतजलस्य विद्यमानत्वात्। तथा च यत्र कार्याभावः तत्र कारणाभाव इति व्यतिरेकेण वा, यत्र कारणं तत्र कार्यमित्यन्वयेन वा व्याप्तेरभावात् कारणात् कार्यानुमानं न सम्भवति। एवमनुमानं प्रयुज्यमानं आभासरूपं स्यात्। न च एवंविधं कार्यात् कारणानुमानम्। अतः अनुगतप्रतीत्या सिद्ध्यति तद्विषयभूतं सामान्यम्।

**(३५) सामान्यं विशेष इति बुध्यपेक्षम् ॥३**

सामान्यं द्विविधं केवलसामान्यं विशेषात्मकसामान्यमिति, इति विभागमभिप्रेत्य सामान्यमिति विशेष इति च व्यवहारे नियामकमाह। इति-इतिव्यवहरणमित्यर्थः। बुद्धिं अपेक्षत इति, बुद्धेरपेक्षा यस्येति वा बुद्ध्यपेक्षम्। अपेक्षा अधीनप्रवृत्तिकत्वम्। समानाकारबुद्धिजनने तज्जनको धर्मः तां बुद्धिं निमित्तीकृत्य सामान्यमिति व्यवह्रियते। व्यावृत्तिबुद्धिजनने तज्जनको धर्मः तां बुद्धिं निमित्तीकृत्य विशेष इति व्यवह्रियते। स्वकार्यभूतसमानाकारबुद्धिवशात् धर्मस्य सामान्यमिति व्यवहारः प्रवर्तते। तथा स्वकार्यभूतव्यावृत्तबुद्धिवशात् विशेष इति व्यवहारः। तत्र कश्चन धर्मः समानाकारामेव बुद्धिं जनयतिः न तु व्यावृत्तबुद्धिम्। स धर्मः केवलसामान्यम्। कश्चन धर्मः उभयीं बुद्धिं जनयति अनुवृत्तबुद्धिं च व्यावृत्तबुद्धिं च। स धर्मः विशेषात्मकसामान्यम्। सामान्यं च विशेषश्चेति यावत्। समानाकारप्रतीतिजनकत्वं बुद्धौ कृत्वा सामान्यमिति व्यवहरन्ति। व्यावृत्तप्रतीतिजनकत्वं बुद्धौ कृत्वा विशेष इति व्यवहरन्ति, इति वा बुद्ध्यपेक्षत्वमुपपादनीयम्।

तत्र केवलसामान्यं तस्य तथात्वे हेतुकथनपूर्वकं दर्शयति—

**(३६) भावोऽनुवृत्तेरेव हेतुत्वात् सामान्यमेव ॥४**

भावः सत्ता । भूधातुर्हि सत्तावाची । सामान्यमेव न तु विशेषोऽपि । केवल-सामान्यमिति यावत् । कुतः । अनुवृत्तेरेव हेतुत्वात् । अनुवृत्तिरिह प्रतीतेर्विवक्षिता । एकस्यां व्यक्तौ यादृशी प्रतीतिः तादृश्या एव व्यक्त्यन्तरेषु उत्पत्तिः अनुवृत्तिः । अस्या एव हेतुः सत्ता । पृथिव्यादीनि द्रव्याणि सन्ति, रूपादयो गुणाः सन्तः, कर्माणि उत्क्षेपणादीनि सन्ति, इति त्रिष्वपि पदार्थेषु सत्तया प्रतीत्यनुवृत्तेरेव जायमानत्वात् । द्रव्यं न गुणः, न कर्म, सत्त्वादिति सत्ताहेतुकव्यावृत्तिप्रतीतेरजायमानत्वात् । सत्ता हि गुणे कर्मणि च विद्यमानत्वात् गुणभेदे कर्मभेदे वा न हेतुः । यद्यपि द्रव्यं न सामान्यं सत्त्वात् इति सामान्यादिव्यावृत्तिप्रतीतौ हेतुर्भवत्येव सत्ता, तथापि जातिमतां द्रव्यगुणकर्मणां मिथो भेदप्रतीतेरेव व्यावृत्तिपदेन विवक्षितत्वात् ईदृशव्यावृत्तिहेतु-त्वाभावाच्च सत्तासामान्यस्य, इदं केवलसामान्यमेवेति युक्तो निर्णयः ।

**(३७) द्रव्यत्वं गुणत्वं कर्मत्वं च सामान्यानि विशेषाश्च ॥५**

सामान्यस्य द्वितीयां विधामिह दर्शयति । पृथिव्यादिषु नवस्वपि द्रव्येषु द्रव्यं द्रव्यमित्यनुगतप्रतीतिहेतुत्वात् द्रव्यत्वं सामान्यम् । पृथिवी न गुणः, न कर्म, द्रव्यत्वात् इति व्यावृत्तिप्रतीतिहेतुत्वात् विशेषश्च । एवं गुणत्वकर्मत्वयोरपि द्रष्टव्यम् । अत इमानि विशेषात्मकानि सामान्यानि । न परं एत एव विशेषाः सामान्यरूपा भवन्ति, अपि तु अन्येऽपि बहवो विशेषाः तथाविधाः सन्तीति ज्ञापयन् अर्थात् सामान्यादनन्तरं निर्दिष्टं पञ्चमं पदार्थमपि लक्षयति—

**(३८) अन्यत्रान्त्येभ्यो विशेषेभ्यः ॥६**

विशिष्यते व्यावर्त्यते भिन्नतया बोध्यते अनेनेति विशेषः । अन्ते यावन्तो विशेषाः तेषां चरमे स्थाने भवाः अन्त्याः । यदपेक्षया अपरो विशेषो नास्ति ते अन्त्या विशेषाः । जलादिपरमाणूनां सर्वथा एकरूपत्वात् मिथो भेदसिद्ध्यर्थं एकैकस्मिन् परमाणौ एकैको विशेषोऽस्तीत्यभ्युपगम्यते । एकपरमाणुमात्रवृत्तित्वेन एकैकोऽपि विशेषः केवलं विशेष एव । न तु कथमपि सामान्यम् । अनेकवृत्तित्वे हि सामान्यत्वं स्यात् । न चास्य सामान्यत्वाभावे एतदपेक्षया अपरो विशेषः संभवति । अतः इमे अन्त्या

हेत्वाभास इत्यर्थः । प्रथमाशब्दोपि कथञ्चिदुपपादनीय इति सोऽपि हेत्वाभासः । एवं प्रत्यभिज्ञाऽपि । स एव व्रीहिरिति हि व्यक्तिभेदेपि जात्येकत्वप्रयुक्तो व्यवहारः । प्रबलप्रमाणवशात् अनित्यत्वे, तेन बहुत्वे च सिद्धे सति एकताहेतवः असाधका हेत्वाभासा भवन्तीत्यर्थः ।

११८ संख्याभावः सामान्यतः ॥३८॥

संख्यायाः प्रथमात्वस्य द्वितीयतृतीयपठितयोः ऋचोः भावः सामान्यतः ऐकरूप्यात् शब्दव्यक्तिभेदेऽपि वर्णात्मकानां शब्दानां शब्दानुपूर्व्याश्च समानत्वादित्यर्थः । उपपादनीय इति शेषः । श्रुतिरपि दृष्टानुरोधेनैव नेयेति ज्ञापनार्थमस्य पृथगुक्तिः ।

आकाशगुणस्य शब्दस्य गुणत्वानित्यत्वस्थापनस्य कालदिङ्निरूपणात् पूर्वमेव औचित्येऽपि आत्मनो भोगे "प्रसिद्धा इन्द्रियार्थाः" इत्यनुपदं निर्देक्ष्यमाणानां रूपरसगन्धस्पर्शशब्दानां भोग्यविषयतया प्रधानत्वस्य, अदृष्टानुरोधेन क्लृप्ते काले देशे च भोग इत्यधिकरणतया देशकालयोरुपसर्जनत्वस्य च व्यञ्जनाय शब्दविचारस्य कालदिङ्निरूपणानन्तरं अध्यायान्ते निबन्ध इति बोध्यम् ॥

इति कणादसूत्रवृत्तौ सुगमायां द्वितीयाध्याये द्वितीयमाह्निकम् ॥



# अथ तृतीयेऽध्याये

## प्रथममाह्निकम्

११९. **प्रसिद्धा इन्द्रियार्थाः** ।। १ ।।

इन्द्रियाणां अर्थाः इन्द्रियकरणकभोगविषयाः । भोग्यपदार्था इति यावत् । ते च पञ्चभूतगुणाः रूपरसगन्धस्पर्शशब्दाः पञ्च । ते प्रसिद्धाः । प्रामाणिकतया स्थापिता इति भावः । अनेनातीताध्यायद्वयप्रधानप्रतिपाद्यार्थं उक्तः ।।

ततः किमित्यत्राह :—

१२०. **इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः** ।। २ ।।

इन्द्रियार्थप्रसिद्धिः तात्त्विकतया स्थापिता इन्द्रियार्था इत्यत्र तात्पर्यम् । इन्द्रियार्थेभ्योऽर्थान्तरस्य, भोगोपकरणभूतेन्द्रियेभ्यः भोग्येभ्यो रूपरसादिभ्यश्च, अर्थान्तरस्य-व्यतिरिक्तपदार्थस्य, आत्मन इति भावः । हेतुः ज्ञापकं प्रमाणम् । भोग-करणानि इन्द्रियाणि । भोग्या रूपादयः । इन्द्रियैः करणैः रूपरसादीन् यो भुङ्क्ते तेन केनचिद्भवितव्यम् । यः सः स आत्मेति आत्मसाधकोऽयं हेतुरित्यर्थः । एतेन कालदिङ्निरूपणानन्तरं क्रमप्राप्तात्मनिरूपणमिह क्रियते, इति ज्ञापितम् । यद्यपि प्रसिद्धिरिति व्याप्तिग्रह उच्यते तथाऽपि प्रकृते सोऽर्थो न विवक्षितः ।।

इमं पक्षं दूषयति :—

१२१. **सोऽनपदेशः** ।। ३ ।।

सः आत्मसाधकतया उक्तः इन्द्रियार्थरूपो हेतुः अनपदेशः, अपदेशः हेतुः तद्भिन्नः हेत्वाभासः । अर्थाः प्रत्यक्षाः । तद्ग्राहकतया इन्द्रियाण्यपि सिद्धानि । एतैरर्थान्तरं तु कथं सिद्ध्येत् । न हि तेनैतानि सम्बद्धानि दृष्टानि । स्वसत्ताया-मितरापेक्षाणि वा । भोक्तारं विना भोगकरणानि भोगविषयाश्च कस्य भोगं जनयन्तीति चेत्, इन्द्रियाणामेव वा, शरीरस्य वा । एतेभ्यो व्यतिरिक्तः कश्चित् भोक्तेति तु कथमेतेभ्योऽवगच्छेम । तस्मादयमहेतुरिति ।।

कस्तर्हि हेतुरिति चेत् ज्ञानमिति दर्शयन्नाह :—

१२२. **कारणाज्ञानात्** ।। ४ ।।

अयं घटः, अयं पटः इति ज्ञानं तावत् तत्तद्विषयावगाहि प्रसिद्धम् । अहं जानामि स जानातीति नियमेन किञ्चिदाश्रितत्वप्रतीतेः तस्य गुणत्वं आश्रयसापेक्षत्वं

च सिद्धम्। स आश्रयः क इति विमर्शे इन्द्रियशरीरादिषु क्लृप्तद्रव्येष्वन्यतमं वा अतिरिक्तं वा किञ्चिदिति कोटिद्वयं स्फुरति। तत्र पूर्वा कोटिर्नोपपद्यते। इन्द्रियशरीरादिकं हि पाञ्चभौतिकं कार्यम्। तस्य चेद् ज्ञानं गुणः तर्हि तेन कारणगुणपूर्वकेण भाव्यम् रूपादिवत्। न च तत्कारणेषु परमाणुषु ज्ञानमस्तीत्यत्र किञ्चन प्रमाणमस्ति। अतः परमाणूनां कारणानां अज्ञानात् ज्ञानाभावात् न कार्याणां शरीरेन्द्रियादीनां ज्ञानं गुणः॥

ननु, शरीरादेरेवेदं ज्ञानं गुणः। कार्ये विद्यमानोऽयं कारणेष्वपि सन्तमनुमापयतीत्यत्राह :—

**१२३. कार्येषु ज्ञानात्॥ ५॥**

कार्येषु ज्ञानम् न तु कार्याणाम्। कार्यविषयकं ज्ञानं भवति। न तु कार्याश्रितम्। "अस्तीन्द्रियं, इदं शरीरं" इत्येवंरूपा हि प्रतीतिः। न तु "चक्षुर्ज्ञातृ, शरीरं ज्ञातृ" इति। अतः कार्येषु ज्ञानस्याविद्यमानत्वात् न कारणेषु तदनुमानं शक्यम्। एतेन आकाशस्य शब्द इव शरीरादेरकारणगुणपूर्वक एव गुणो ज्ञानमिति निरस्तम्। ज्ञानस्य कार्याश्रितत्वासिद्धेः॥

कार्यगुणत्वाभावे हेत्वन्तरमाहः—

**१२४. अज्ञानाच्च॥ ६॥**

सुषुप्तौ ज्ञानसामान्यं नास्ति। यदि शरीरादिकार्यगुणो ज्ञानं तर्हि एवं ज्ञानाभावो न स्यात्। तद्गुणानां यावत्स्वरूपभावित्वात्। अतो न तद्गुणः ज्ञानम्। एवं क्लृप्तद्रव्येषु यस्य कस्यापि ज्ञानाश्रयत्वायोगात् अतिरिक्तं द्रव्यं तदाश्रयभूतमस्तीत्यनुमीयते। तद्द्रव्यमात्मा॥

एवमात्मसाधकहेतुकथनेन फलितमाहः—

**१२५. अन्यदेव हेतुरित्यनपदेशः॥ ७॥**

उक्तरीत्या इन्द्रियार्थेभ्योऽन्यत् ज्ञानमेव हेतुः आत्मसाधकं प्रमाणमिति हेतोः इन्द्रियार्थरूपो हेतुः पूर्वोक्तोऽनपदेशः अहेतुः॥

एकस्य हेतुत्वे अपरस्य अहेतुत्व कथं भवेत्। सोऽपि हेतुः कुतो न भवेत्। न ह्येकस्यानुमेयस्य एक एव हेतुरित्यस्ति नियमः। क्रियावत्त्वाद्गुणवत्त्वाच्चेति स्वयमुक्तेः। अत्राह—

१२६. **अर्थान्तरं ह्यर्थान्तरस्यानपदेशः ॥ ८ ॥**

अन्योऽर्थः अन्यस्यार्थस्य अनपदेशो हि भवति। न हि घटः पटस्य पटो वा घटस्यापदेशो भवति। तर्हि कथं ज्ञानमात्मनोऽपदेशो भवति। अन्यद्धि ज्ञानम्। अन्यश्चात्मा। सत्यम्। मिथः असम्बद्धयोर्द्वयोरर्थयोः एक इतरस्य हेतुर्न भवतीत्युक्तम्। ज्ञानात्मानौ तु मिथः सम्बद्धौ। आश्रयाश्रयिभावश्च सम्बन्धः। तेन आश्रयि ज्ञानं आश्रयस्यात्मनः हेतुर्भवति। असम्बद्धत्वात्तु इन्द्रियार्थौ न हेतवो भवन्ति। ननु भोग्यभोक्तृभावसम्बन्धस्तत्रास्तीत्युक्तम्। सत्यमुक्तम्। किन्तु शरीरेन्द्रियादेरेव तद्भोक्तृत्वमस्त्विति तत्रान्यथासिद्धिदोष उक्तो न विस्मर्तव्यः।

उक्तार्थविवेकद्रढिम्ने हेतुभावार्हान् सम्बद्धान् अर्थान् विभज्य दर्शयति :—

१२७. **संयोगि समवाय्येकार्थसमवायि विरोधि च ॥ ९ ॥**

धूमोऽग्निना संयुक्तः अग्नेर्हेतुः। आकाशे समवेतः शब्दः तस्य। स्पर्शेन एकस्मिन्नेवार्थे समवेतं रूपं तस्य। रक्तमुखो नकुलः हतस्य सर्पस्य चेति। यद्वा एवं सम्बन्धवन्तोऽप्यर्थाः अनपदेशा भवन्तीति पूर्वसूत्रात् अनपदेशपदमनुषज्य योज्यम्। तत्र च इमान्युदाहरणानि। अग्निर्धूमस्य। सत्ता द्रव्यस्य। स्पर्शो रूपस्य। मार्जारो मूषिकस्येति ॥

सद्धेतवस्तर्हि के इत्यत्र तेषामुपलक्षणानि कानिचिदाह चतुर्भिः सूत्रैः :—

१२८. **कार्यं कार्यान्तरस्य ॥ १० ॥**

अपदेशो भवतीति शेषः। यथा आम्रफले रूपान्तरं रसान्तरस्य ॥

१२९. **अभूतं भूतस्य ॥ ११ ॥**

अनिष्पन्नं निष्पन्नस्यापदेशो भवति। यथा अपतिता वृष्टिः वाय्वभ्रसंयोगस्य निष्पन्नस्य। वायुना विशकलिता हि मेघा न वर्षन्ति ॥

१३०. **भूतमभूतस्य ॥ १२ ॥**

निष्पन्नमनिष्पन्नस्य। यथा पतिता वृष्टिः असञ्जातस्य वाय्वभ्रसंयोगस्य ॥

१३१. **भूतो भूतस्य ॥ १३ ॥**

निष्पन्नो निष्पन्नस्य। यथा प्रसवो गर्भाधानस्य। पूर्वं अभूतं भूतमिति

सामान्ये नपुंसकम् । अत्र अपदेशं बुद्धौ कृत्वा पुंस्त्वम् ॥

एते परं कथं हेतवो भवन्तीत्यत्र नियामकमाह—

**१३२. प्रसिद्धिपूर्वकत्वादपदेशस्य ॥ १४ ॥**

प्रसिद्धिः प्रमात्मको दृढो व्याप्तिनिश्चयः । तस्मिन् सत्येव कश्चिदर्थः अन्यानुमितिहेतुर्भवति । अन्यथा न । एवं प्रसिद्धिपूर्वकत्वात् सद्धेतोः उक्तानां हेतूनां च निश्चितव्याप्तिकत्वात् ते सर्वे सद्धेतवो भवन्तीति भावः । यस्मिन् फले रूपान्तरं तस्मिन् रसान्तरं, यदा पतनार्हा वृष्टिः न पतति तदा वाय्वभ्रसंयोगः, यदा वृष्टिः पतिता तदा उक्तसंयोगाभावः, या प्रसूते सा ततः प्राक् आहितगर्भा, इत्यस्ति निश्चिता व्याप्तिः । अत इमे सम्यञ्चोऽपदेशाः । व्याप्तिर्हेतोर्हेतुत्वापादिका । तदभावे हेतुरहेतुरिति सारार्थः ॥

सम्प्रति विवेकसिद्धये असद्धेतून् निरूपयति :—

**१३३. अप्रसिद्धोऽनपदेशोऽसन् संदिग्धश्चानपदेशः ॥ १५ ॥**

अप्रसिद्धः एको हेत्वाभासः । असन् संदिग्धश्च अन्यौ द्वौ हेत्वाभासौ । आहत्य त्रयो हेत्वाभासाः । प्रसिद्धः निश्चितव्याप्तिकः । तद्विरुद्धः निश्चितविपरीतव्याप्तिकः अप्रसिद्धः । विरुद्ध इत्यर्थः । असन् पक्षेऽवर्तमानः । असिद्ध इति प्रसिद्धः । संदिग्धः सपक्षविपक्षोभयवृत्तितया पक्षे साध्यसंदेहजनकः, अत एव संदिग्ध इत्युक्तः सव्यभिचारः अनैकान्तिकापराभिधानः ॥

अत्र आद्ययोर्द्वयोरुदाहरणम्—

**१३४. यस्माद्विषाणी तस्मादश्वः ॥ १६ ॥**

गां पक्षीकृत्य "अयमश्वः यस्माद्विषाणी" इति प्रयोगे विषाणित्वस्य अश्वत्वाभावव्याप्तत्वेन साध्यविरुद्धार्थसाधकत्वात् विरुद्धोऽयं हेतुः । अश्वं पक्षीकृत्य तथा प्रयोगे विषाणित्वस्य हेतोः पक्षेऽश्वे अवर्तमानत्वेन असिद्धोऽयम् ॥

अन्त्यमुदाहरति—

**१३५. यस्माद्विषाणी तस्माद् गौरिति चानैकान्तिकस्योदाहरणम् ॥ १७ ॥**

विषाणित्वस्य गोत्वाभाववति महिषेऽपि विद्यमानत्वात् अनैकान्तिकत्वम् ।

इति चेत्यादि हेत्वाभासप्रकरणावसानज्ञापकम् । पूर्वसूत्रे "इत्यप्रसिद्धासतोरुदाहरणमित्यनुसन्धेयम्" इत्यपि ज्ञापकमिदम् ।

यदर्थमिदं विस्तृतं सदसद्धेतुनिरूपणं तदिदानीमाह—

**१३६. आत्मेन्द्रियार्थसन्निकर्षाद्यन्निष्पद्यते तदन्यत् ॥ १८ ॥**

आत्मा इन्द्रियेण संयुज्यते । इन्द्रियमर्थेन । ततो यत् निष्पद्यते उत्पद्यते तत् । किं तत् ? ज्ञानम् । अन्यत् । निरूपितेभ्यो हेत्वाभासेभ्यो भिन्नम् । सर्वदोषविमुक्तः आत्मसाधकः सद्धेतुरित्यर्थः । ज्ञानस्य उत्पत्तिकारणं आत्मेन्द्रियार्थसन्निकर्षः । आश्रयः आत्मा । उत्पद्यमानं ज्ञानं आत्मन्युत्पद्यत इति यावत् । इतरे सर्वे पदार्थाः आत्मनो भोगापवर्गसाधनत्वात् तस्य शेषभूताः । तस्य सिद्धिः ज्ञानात् निर्दोषाद्धेतोरिति एतदाह्निकप्रधानार्थप्रतिपादकं आत्मसाधनोपसंहारपरं चेदं सूत्रम् ॥

प्रमातुः स्वात्मानुमानमेवं स्यात् । परशरीरेऽप्यात्मास्तित्वज्ञानं,कथं भवेदित्यत्राह :—

**१३७. प्रवृत्तिनिवृत्ती च प्रत्यगात्मनि दृष्टे परत्र लिङ्गम् ॥१९ ॥**

प्रवृत्तिः फलाद्याहरणार्थः शारीरो व्यापारः । निवृत्तिः अनिष्टपरिहारार्थः सः । यथा सर्पदंशभिया पलायनम् । इमे । प्रत्यञ्चति अहमिति स्वमेव गृह्णाति, इति प्रत्यङ् । स चासौ आत्मा च प्रत्यगात्मा तस्मिन् । स्वस्मिन्नित्यर्थः । शरीरद्वारा स्वसंबन्धितयेति भावः । दृष्टे ज्ञाते । परत्र परात्मनि लिङ्गं ज्ञापकं प्रमाणम् । स्वयं हि इष्टमनिष्टं वा ज्ञात्वा इच्छन् जिहासन् वा प्रवर्तते निवर्तते वा । ईदृश्यौ प्रवृत्तिनिवृत्ती परशरीरे पश्यन् प्रमाता ते अपि मत्प्रवृत्तिनिवृत्तिवत् तत्रत्यात्मज्ञानेच्छाप्रयुक्ते इत्यध्यवस्यति । तस्मात् परात्मनि परशरीरस्थे स्वशरीरस्थप्रवृत्तिनिवृत्तितुल्ये प्रवृत्तिनिवृत्ती लिङ्गमिति ॥

इति

कणादसूत्रवृत्तौ सुगमायां

तृतीयाध्याये प्रथममाह्निकम् ॥

# अथ तृतीयाध्याये

## द्वितीयमाह्निकम्

मनोनिरूपणपूर्वकं आत्मसंबन्धिनो बहून् विषयान् प्रतिपादयितुं इदमाह्निकं प्रवर्तते ।

**१३८. आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम् ॥ १ ।**

आत्मेन्द्रियार्थसन्निकर्षे ज्ञानं निष्पद्यत इत्युक्तम् । तत्र आत्मसंयुक्तस्य चक्षुषः घटेन सन्निकर्षे सति कदाचित् घटज्ञानं जायते । कदाचिन्न जायते च । तत् कस्मादिति चेत् तत्र एवं वक्तव्यम् । चक्षुर्व्यतिरिक्तमपि किञ्चिदिन्द्रियमस्ति । आत्मा यदा तेन संयुज्यते, तच्च चक्षुषा, चक्षुश्च घटेन, तदा घटज्ञानस्य भावः उत्पत्तिः । यदा तु आत्मसंयुक्तं तदतिरिक्तमिन्द्रियं चक्षुषा न संयुज्यते तदा चक्षुर्घटसन्निकर्षे सत्यपि घटज्ञानस्यानुत्पत्तिः अभावः इति । यत् तदतिरिक्तमिन्द्रियं तन्मन इति आत्मादिसन्निकर्षे सति ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम् ॥

**१३९. तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ २ ॥**

तस्य उक्तयुक्त्या सिद्धस्य मनसः क्रियावत्त्वात् संयोगसंख्यापरिमाणादिगुणवत्त्वाच्च वायुवत् द्रव्यत्वं सिद्ध्यति । अद्रव्यत्वात् वायुपरमाणुवन्नित्यत्वम् ॥

अथ सङ्ख्योच्यते —

**१४०. प्रयत्नायौगपद्यात् ज्ञानायौगपद्याच्चैकम् ॥ ३ ॥**

एकमेव मनः एकस्यात्मनः । जानाति इच्छति यतत इति ज्ञानेच्छाप्रयत्ना आत्मनि मनःसंयोगाज्जायन्ते । तत्र यदि युगपद् अनेकं ज्ञानं वा इच्छा वा प्रयत्नो वा उत्पद्येत तर्हि तत्कारणतया अनेकं मनः कल्प्येत । न च तथाऽस्ति । एकस्मिन् काले एकमेव ज्ञानं, तन्मूलेच्छा, प्रयत्नश्च । अतोऽनेकमनःकल्पने हेत्वभावात् एकमेव मन इति । यद्यपि ज्ञानायौगपद्यादित्येकेनैवालं हेतुना तथाऽपि ज्ञानप्रयोज्यस्य प्रयत्नस्यैकत्वात् प्रयोजकं ज्ञानमप्येकमेव, न तु कदाचिदप्यनेकमिति तदेकत्वद्रढिम्ने प्रयत्नायौगपद्यमपि हेतूकृतमिति ज्ञेयम् ॥

**१४१. प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः सुख-दुःखप्रयत्नाश्चात्मलिङ्गानि ॥ ४ ॥**

प्राणः प्राणनं, प्राणवायोर्बहिः निस्सारणम्। अपानः अपाननं, प्राणवायोरन्तराकर्षणम्। निमेषोन्मेषौ चक्षुषो निमीलनोन्मीलने। जीवनं शरीरधारणम्। मनोगतिः मनसः तेन तेनेन्द्रियेण सन्निकर्षाय सञ्चारः। इन्द्रियान्तरविकारः अनुभूतसुगन्धिरसाढ्यफलदर्शनेन आस्ये दन्तोदकसंप्लवः। एते सुखदुःखादयश्च आत्मनो लिङ्गानि। आत्मनः सत्त्वे प्रमाणानि इत्यर्थः। आत्मनः इमानि कार्याणि। आत्मानं विना नैतानि भवेयुः। मृतशरीरे एषामभावात्। अतः ज्ञानवदेतान्यपि तल्लिङ्गानीति भावः। भोक्तुरात्मनः करणत्वेन शेषत्वात् निर्देशे पश्चात्तनस्यापि मनसः मनोगतेरप्यात्मलिङ्गत्वकथनसौकर्याय पूर्वं निरूपणमिति स्पष्टम्। शरीरे यद्यद्भवति तत्सर्वमात्मायत्तमिति तत्प्राधान्यख्यापनाय इयतामात्मलिङ्गत्वोक्तिः।

अत्र प्राणापानयोरात्मलिङ्गत्वाभिधानात् आत्मनः प्राणव्यतिरिक्तत्वं, निमेषोन्मेषोक्त्या चक्षुरिन्द्रियात्, मनोगत्युक्त्या मनसः, इन्द्रियान्तरविकारोक्त्या सर्वेन्द्रियान्तरेभ्यः, सुखाद्युक्त्या तेभ्यश्च व्यतिरिक्तत्वं ज्ञापितम्।

एवमात्मा साधितः। अथ तद्गतान् विशेषानाह :—

**१४२. तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ ५ ॥**

तस्य आत्मनः द्रव्यत्वं ज्ञानादिगुणाश्रयत्वात् वायुवत् सिद्धम्। अद्रव्यत्वान्नित्यत्वं वायुपरमाणुवत् ॥

वायाविव आत्मनि आगमिकत्वपूर्वपक्षं कुर्वन् प्रथमं तत्र दृष्टं लिङ्गं नास्तीत्याहः—

**१४३. यज्ञदत्त इति सन्निकर्षे प्रत्यक्षाभावात् दृष्टं लिङ्गं न विद्यते ॥ ६ ॥**

अयं यज्ञदत्त इति तच्छरीरप्रत्ययजनके सन्निकर्षे सति तच्छरीरिण आत्मनः प्रत्यक्षाभावात् तस्मिन् तल्लिङ्गस्य ज्ञानादेः गवि गोत्वादिलिङ्गस्य विषाणित्वककुद्मत्त्वादेरिव दृष्टत्वाभावात् आत्मनि दृष्टं लिङ्गं न विद्यत इत्यर्थः ॥

# अथ तृतीयाध्याये

## द्वितीयमाह्निकम्

मनोनिरूपणपूर्वकं आत्मसंबन्धिनो बहून् विषयान् प्रतिपादयितुं इदमाह्निकं प्रवर्तते ।

**१३८. आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम् ॥ १ ॥**

आत्मेन्द्रियार्थसन्निकर्षे ज्ञानं निष्पद्यत इत्युक्तम् । तत्र आत्मसंयुक्तस्य चक्षुषः घटेन सन्निकर्षे सति कदाचित् घटज्ञानं जायते । कदाचिन्न जायते च । तत् कस्मादिति चेत् तत्र एवं वक्तव्यम् । चक्षुर्व्यतिरिक्तमपि किञ्चिदिन्द्रियमस्ति । आत्मा यदा तेन संयुज्यते, तच्च चक्षुषा, चक्षुश्च घटेन, तदा घटज्ञानस्य भावः उत्पत्तिः । यदा तु आत्मसंयुक्तं तदतिरिक्तमिन्द्रियं चक्षुषा न संयुज्यते तदा चक्षुर्घटसन्निकर्षे सत्यपि घटज्ञानस्यानुत्पत्तिः अभावः इति । यत् तदतिरिक्तमिन्द्रियं तन्मन इति आत्मादिसन्निकर्षे सति ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम् ॥

**१३९. तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ २ ॥**

तस्य उक्तयुक्त्या सिद्धस्य मनसः क्रियावत्त्वात् संयोगसंख्यापरिमाणादिगुणवत्त्वाच्च वायुवत् द्रव्यत्वं सिद्धयति । अद्रव्यत्वात् वायुपरमाणुवन्नित्यत्वम् ॥

अथ सङ्ख्योच्यते—

**१४०. प्रयत्नायौगपद्यात् ज्ञानायौगपद्याच्चैकम् ॥ ३ ॥**

एकमेव मनः एकस्यात्मनः । जानाति इच्छति यतत इति ज्ञानेच्छाप्रयत्ना आत्मनि मनःसंयोगाज्जायन्ते । तत्र यदि युगपद् अनेकं ज्ञानं वा इच्छा वा प्रयत्नो वा उत्पद्येत तर्हि तत्कारणतया अनेकं मनः कल्प्येत । न च तथाऽस्ति । एकस्मिन् काले एकमेव ज्ञानं, तन्मूलेच्छा, प्रयत्नश्च । अतोऽनेकमनःकल्पने हेत्वभावात् एकमेव मन इति । यद्यपि ज्ञानायौगपद्यादित्येकेनैवालं हेतुना तथाऽपि ज्ञानप्रयोज्यस्य प्रयत्नस्यैकत्वात् प्रयोजकं ज्ञानमप्येकमेव, न तु कदाचिदप्यनेकमिति तदेकत्वद्रढिम्ने प्रयत्नायौगपद्यमपि हेतूकृतमिति ज्ञेयम् ॥

यद्येवं तर्हि अहंशब्दार्थः अहंप्रत्ययगोचरः आत्मेत्येव तन्निरूपणं सुकरम्। किं ज्ञानादिलिङ्गकानुमानोपन्यासव्यसनेनेत्यत्राह—

**१४८. दृष्ट आत्मनि लिङ्गे एक एव दृढत्वात् प्रत्यक्षवत् प्रत्ययः ॥ ११ ॥**

यद्यप्यहमिति प्रत्यक्ष आत्मा तथापि सः शरीरसंपृक्तः पयोमिश्रं नीरमिव न स्फुटो भासते। शरीरमेवाहमर्थ इति मतिर्भवति। तत्र प्रदर्शितरीत्या ज्ञानलिङ्गेन शरीरेन्द्रियादिव्यतिरिक्ततया आत्मनि निश्चिते 'अहं' जानामीति प्रत्यक्षमात्मानं तत्स्थं ज्ञानं च पश्यति। एवं स्वात्मनि दृष्टेन लिङ्गेन परात्मनि यः प्रत्ययो जायते स एक एव दृढत्वात् सन्देहानर्हत्वात् प्रत्यक्षवत् अनुमितिरूपत्वेऽपि प्रत्यक्षतुल्यः प्रत्ययो भवति। एवं च स्वात्मनि अहंप्रत्ययस्य विविक्तविषयत्वसिद्धये परात्मनि दृष्टलिङ्गेन दृढानुमितिसिद्धये च पूर्वं ज्ञानलिङ्गेन आत्मसाधनमिति भावः ॥

अहं देवदत्तः अहं यज्ञदत्त इति प्रत्यक्षं प्रतिपादयता देवदत्तादिसंज्ञाः आत्मवाचिन्यः इत्युक्तं भवति। तथा सति 'देवदत्तो गच्छति' 'यज्ञदत्तो गच्छति' इति व्यवहारः कथम् ? न हि गमनक्रिया आत्मनि समवैति। शरीरवृत्तित्वात्। अत्राह—

**१४९. देवदत्तो गच्छति यज्ञदत्तो गच्छतीत्युपचारात् शरीरे प्रत्ययः ॥ १२ ॥**

अस्मिन् व्यवहारे आत्मवाचिनो देवदत्तादिशब्दस्य शरीरे उपचारः अमुख्यवृत्तिः। तेन औपचारिकोऽयं प्रत्ययः ॥

**१५०. सन्दिग्धस्तूपचारः ॥ १३ ॥**

आत्मवाचिनो यज्ञदत्तादिशब्दस्य शरीरे उपचार इति सन्दिग्धमेतत्। मुख्यवृत्त्या शरीरवाची। उपचारादात्मवाचीति किं न स्यात् ॥

इति शङ्कायां परिहारमाह—

# अथ तृतीयाध्याये

## द्वितीयमाह्निकम्

मनोनिरूपणपूर्वकं आत्मसंबन्धिनो बहून् विषयान् प्रतिपादयितुं इदमाह्निकं प्रवर्तते ।

**१३८. आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम् ॥ १ ॥**

आत्मेन्द्रियार्थसन्निकर्षे ज्ञानं निष्पद्यत इत्युक्तम् । तत्र आत्मसंयुक्तस्य चक्षुषः घटेन सन्निकर्षे सति कदाचित् घटज्ञानं जायते । कदाचिन्न जायते च । तत् कस्मादिति चेत् तत्र एवं वक्तव्यम् । चक्षुर्व्यतिरिक्तमपि किञ्चिदिन्द्रियमस्ति । आत्मा यदा तेन संयुज्यते, तच्च चक्षुषा, चक्षुश्च घटेन, तदा घटज्ञानस्य भावः उत्पत्तिः । यदा तु आत्मसंयुक्तं तदतिरिक्तमिन्द्रियं चक्षुषा न संयुज्यते तदा चक्षुर्घटसन्निकर्षे सत्यपि घटज्ञानस्यानुत्पत्तिः अभावः इति । यत् तदतिरिक्तमिन्द्रियं तन्मन इति आत्मादि-सन्निकर्षे सति ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम् ॥

**१३९. तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ २ ॥**

तस्य उक्तयुक्त्या सिद्धस्य मनसः क्रियावत्त्वात् संयोगसंख्यापरिमाणादि-गुणवत्त्वाच्च वायुवत् द्रव्यत्वं सिद्ध्यति । अद्रव्यत्वात् वायुपरमाणुवन्नित्यत्वम् ॥

अथ सङ्ख्योच्यते —

**१४०. प्रयत्नायौगपद्यात् ज्ञानायौगपद्याच्चैकम् ॥ ३ ॥**

एकमेव मनः एकस्यात्मनः । जानाति इच्छति यतत इति ज्ञानेच्छाप्रयत्ना आत्मनि मनःसंयोगाज्जायन्ते । तत्र यदि युगपद् अनेकं ज्ञानं वा इच्छा वा प्रयत्नो वा उत्पद्येत तर्हि तत्कारणतया अनेकं मनः कल्प्येत । न च तथाऽस्ति । एकस्मिन् काले एकमेव ज्ञानं, तन्मूलेच्छा, प्रयत्नश्च । अतोऽनेकमनःकल्पने हेत्वभावात् एकमेव मन इति । यद्यपि ज्ञानायौगपद्यादित्येकेनैवालं हेतुना तथाऽपि ज्ञानप्रयोज्यस्य प्रयत्न-स्यैकत्वात् प्रयोजकं ज्ञानमप्येकमेव, न तु कदाचिदप्यनेकमिति तदेकत्वद्रढिम्ने प्रयत्नायौ-गपद्यमपि हेतूकृतमिति ज्ञेयम् ॥

१५३. सन्दिग्धस्तूपचारः ॥१६॥

तुकारः आक्षेपद्योतकः। अहंशब्दस्य आत्मवाचकत्वेन निश्चितत्वात् तत्सामानाधिकरण्येन प्रयुक्तो देवदत्तादिशब्दोऽपि आत्मवाचीति सिद्धयति। तेन देवदत्तो गच्छतीत्यादिषु व्यवहारेषु देवदत्तादिशब्दः शरीरे औपचारिक इत्युक्तम्। इदानीं तु अहंशब्दोऽपि शरीरपरः प्रयुज्यत इत्युच्यते। अत्र ब्रूमः। अहंशब्दः शरीरपरः मुख्य एवास्तु। एवं देवदत्तादिशब्दोऽपि। किमुपचाराङ्गीकारेण। मुख्यत्वसंभवे अमुख्यत्वाङ्गीकारायोगात्। अतोऽत्र भवता उच्यमान उपचारः संदिग्धः अङ्गीकारानर्हः॥

पूर्वसूत्रे देवदत्तो गच्छतीत्युपचारात् इत्ययं भागः अनपेक्षितः। अभिमानात् तावदिति हेतुकथनात् उपचारो न तत्रोक्त इति, तेन 'संदिग्धस्तूपचारः' इत्यनेन सूत्रेणोपचारखण्डनमन्यथा नोपपद्यते, इति च मन्यमानैर्योजित इति मन्यामहे॥

इममाक्षेपं परिहरति–

१५४. न तु शरीरविशेषाद् यज्ञदत्तविष्णुमित्रयोर्ज्ञानं विषयः॥१७॥

तुकारः पूर्वपक्षं व्यावर्तयति। समागतौ यज्ञदत्तविष्णुमित्रौ अन्योन्यस्य शरीरविशेषं पश्यतः। परं तु अस्येदानीमिदं ज्ञानं वर्तत इति परस्परस्य ज्ञानं परस्परस्य नैव विषयो भवति। नैव ज्ञातं भवतीत्यर्थः। यदि शरीरगुणः स्यात् ज्ञानं तर्हि तद् ज्ञातं स्यात्। न तु ज्ञानं भवति। तस्मात् शरीराद्यतिरिक्तस्य कस्यचित् गुण इति दुरपह्नवमिदम्। देवदत्तोऽहं जानामीति असन्दिग्धाबाधितप्रतीतिबलात् सः अहमर्थं आत्मेति, देवदत्तादिशब्दः तस्यैव वाचक इति च निश्चीयते। एवं यज्ञदत्तो गच्छति, अहं गच्छामि इति प्रतीतिव्यवहारौ औपचारिकाविति उपपाद्यौ। यदि तु पूर्वपक्षरीत्या अहंशब्दः देवदत्तादिशब्दश्च शरीरस्य मुख्यवाचकौ तर्हि अहं जानामि देवदत्तो जानातीत्यत्र अहंशब्ददेवदत्तशब्दयोरर्थः कः? न तावच्छरीरम्। तस्य ज्ञानाश्रयत्वासंभवात्। नाप्यात्मा। शरीरस्याहमर्थत्वे तदतिरिक्तस्याहमर्थस्याप्रसिद्धेः। असिद्धस्य च औपचारिकतयाऽपि वाच्यत्वायोगात्। तस्मात् इमौ शब्दौ आत्मनि मुख्यौ। शरीरे औपचारिकाविति इयमेव व्यवस्था युक्तेति न सन्दिग्धता

उपचारस्येति ।

आत्मनोऽनागमिकत्वप्रकरणमिदमुपसंहरति :—

**१५५. अहमिति मुख्ययोग्याभ्यां शब्दवद् व्यतिरेकाव्यभिचाराद् विशेषसिद्धेर्नागमिकः ॥ १८ ॥**

आत्मा नागमिकः । प्रकारान्तरेणैव विशेषस्य अहन्त्वरूपस्य आत्मत्वस्य सिद्धेः अवधारणात् । किं तत् प्रकारान्तरम् ? अहमिति प्रत्ययस्य व्यतिरेकाव्यभिचारः इतरेभ्यः सर्वेभ्यः व्यावृत्तत्वनियमः । नियमेन व्यावृत्तिरिति यावत् । अहमिति प्रत्ययः प्रत्यक्षात्मकः । लिङ्गविशेषाजन्यत्वात् । साक्षात्काररूपत्वात् । स चायं प्रत्ययः सर्वेभ्यो विषयान्तरेभ्यो व्यावृत्तः आत्मैकविषयः । कस्मात् । मुख्ययोग्याभ्यां अन्वय-व्यतिरेकाभ्याम् । मुख्यौ साक्षादुपलभ्यमानौ । योग्यौ सन्देहविपर्ययरहितौ । आत्मनि भवतीत्यन्वयः । अन्यस्मिन् यस्मिन् कस्मिन्नपि न भवतीति व्यतिरेकः । शब्दवदिति दृष्टान्तः । "अहमिति शब्दस्य व्यतिरेकान्नागमिकं" इति पूर्वमुक्तम् । तद्वत् अहमिति प्रत्ययस्यापि व्यतिरेकाद् विशेषसिद्धेर्नागमिक आत्मा ।

अथात्मनः सङ्ख्यामाह—

**१५६. सुखदुःखज्ञाननिष्पत्त्यविशेषादैकात्म्यम् ॥ १९ ॥**

ऐकात्म्यं आत्मनः एकत्वम् । तदभ्युपगन्तव्यम् । कुतः ? सुखाद्युत्पत्तिविषये अविशेषात् । शब्दस्य सर्वत्रोपलम्भादाकाश एक इत्युक्तम् । परापरव्यवहारस्य सार्वत्रिकत्वात् तत्कारणभूतः कालः एक इत्युक्तम् । तथा सुखदुःखादेः सर्वेषु शरीरेषूपलम्भात् तदाश्रय आत्मापि एको भवितुमर्हतीति पूर्वः पक्षः ॥

सिद्धान्तमाह—

**१५७. नानात्मानो व्यवस्थातः ॥ २० ॥**

आत्मानः नाना बहवः । कुतः ? सुखदुःखव्यवस्थानात् । यदा एकस्मिन् शरीरे सुखं वा दुःखं वाऽनुभूयते तदा तत् सर्वस्मिन् शरीरे नानुभूयते । यद्येक एवात्म तर्हि सर्वत्र तदनुभवेन भाव्यम् । न परं एवं एकस्य सर्वत्रानुभवाभावः । अपि तु विपरीतानुभवोऽप्यस्ति । यदा एकः सुखी तदाऽन्यो दुःखी भवति । सुखदुःखे च भिन्न-भिन्ने तारतम्यवती च भवतः । एवं व्यवस्थादर्शनात् प्रतिशरीरं, विभिन्न एक

आत्मेति अनन्ता आत्मानः ॥

**१५८. शास्त्रसामर्थ्याच्च ॥ २१ ॥**

आत्मनो बहुत्वं सिद्धयति । शास्त्राणि वेदाः स्मृतयश्च । तेषां सामर्थ्यं तात्त्विकार्थबोधकत्वशक्तिः । "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् । तमात्मस्थं येऽनुपश्यन्ति धीराः तेषां शान्तिः शाश्वती नेतरेषाम् ।" "वीतरागभयक्रोधा मन्मया मामुपाश्रिताः । बहवो ज्ञानतपसा पूता मद्भावमागताः ॥" इत्यनयोः श्रुतिस्मृत्योः आत्मनां बहुत्वं कण्ठोक्तम् । तदस्तु । तत्तद्विधिनिषेधपराणि सर्वाणि प्रमाणवचनानि साधुकर्मकारी समीचीं गतिमाप्नोति, असाधुकर्मकारी दुर्गतिं गच्छतीति बोधयन्ति आत्मनानात्वं सुस्पष्टं ज्ञापयन्तीति, "शास्त्राच्च" इत्येवं असूत्रयित्वा "शास्त्रसामर्थ्याच्च" इति सूत्रयतो भावः ॥

इति कणादसूत्रवृत्तौ सुगमायां

तृतीयाध्याये द्वितीयमाह्निकम् ॥



उपचारस्येति ।

आत्मनोऽनागमिकत्वप्रकरणमिदमुपसंहरति :—

**१५५. अहमिति मुख्ययोग्याभ्यां शब्दवद् व्यतिरेकाव्यभिचाराद् विशेषसिद्धेर्नागमिकः ॥ १८ ॥**

आत्मा नागमिकः । प्रकारान्तरेणैव विशेषस्य अहन्त्वरूपस्य आत्मत्वस्य सिद्धेः अवधारणात् । किं तत् प्रकारान्तरम् ? अहमिति प्रत्ययस्य व्यतिरेकाव्यभिचारः इतरेभ्यः सर्वेभ्यः व्यावृत्तत्वनियमः । नियमेन व्यावृत्तिरिति यावत् । अहमिति प्रत्ययः प्रत्यक्षात्मकः । लिङ्गविशेषाजन्यत्वात् । साक्षात्काररूपत्वात् । स चायं प्रत्ययः सर्वेभ्यो विषयान्तरेभ्यो व्यावृत्तः आत्मैकविषयः । कस्मात् । मुख्ययोग्याभ्यां अन्वय-व्यतिरेकाभ्याम् । मुख्यौ साक्षादुपलभ्यमानौ । योग्यौ सन्देहविपर्ययरहितौ । आत्मनि भवतीत्यन्वयः । अन्यस्मिन् यस्मिन् कस्मिन्नपि न भवतीति व्यतिरेकः । शब्दवदिति दृष्टान्तः । "अहमिति शब्दस्य व्यतिरेकान्नागमिकं" इति पूर्वमुक्तम् । तद्वत् अहमिति प्रत्ययस्यापि व्यतिरेकाद् विशेषसिद्धेर्नागमिक आत्मा ।

अथात्मनः सङ्ख्यामाह—

**१५६. सुखदुःखज्ञाननिष्पत्त्यविशेषादैकात्म्यम् ॥ १९ ॥**

ऐकात्म्यं आत्मनः एकत्वम् । तदभ्युपगन्तव्म् । कुतः ? सुखाद्युत्पत्तिविषये अविशेषात् । शब्दस्य सर्वत्रोपलम्भादाकाश एक इत्युक्तम् । परापरव्यवहारस्य सार्वत्रिकत्वात् तत्कारणभूतः कालः एक इत्युक्तम् । तथा सुखदुःखादेः सर्वेषु शरीरेषूपलम्भात् तदाश्रय आत्मापि एको भवितुमर्हतीति पूर्वः पक्षः ॥

सिद्धान्तमाह—

**१५७. नानात्मानो व्यवस्थातः ॥ २० ॥**

आत्मानः नाना बहवः । कुतः ? सुखदुःखव्यवस्थानात् । यदा एकस्मिन् शरीरे सुखं वा दुःखं वाऽनुभूयते तदा तत् सर्वस्मिन् शरीरे नानुभूयते । यद्येक एवात्म तर्हि सर्वत्र तदनुभवेन भाव्यम् । न परं एवं एकस्य सर्वत्रानुभवाभावः । अपि तु विपरीतानुभवोऽप्यस्ति । यदा एकः सुखी तदाऽन्यो दुःखी भवति । सुखदुःखे च भिन्न-भिन्ने तारतम्यवती च भवतः । एवं व्यवस्थादर्शनात् प्रतिशरीरं, विभिन्न एक

तदुच्यते तस्य कार्यं लिङ्गमिति। यदेवं नित्यं वस्तु सिध्यति तस्य परमाणुरिति व्यवहारः ॥

कार्यात्कारणानुमानं साधु। कारणात् कार्यानुमानं तु असाधु, इति पूर्वोक्तं स्मारयन्नाह—

**१६१. कारणभावात् कार्यभावः ॥ ३ ॥**

कारणस्य सत्त्वे हि कार्यस्य सत्ता। न तु तस्य असत्त्वे। अतो व्याप्तिसत्त्वात् सद्धेतुरयमिति भावः। ननु कार्यात्कारणं सिद्धयतु। तन्नित्यमिति कथं सिद्धयेदिति चेन्न। परिमाणविशेषविशिष्टं हि कार्यं तदनुगुणमेव कारणमनुमापयति। नित्यमेव च चरमं कारणं तदनुगुणम् ॥

एवं परमाणुरूपं नित्यं कारणं प्रसाध्य तस्य ये अनित्यत्वमाहुः तान् निरस्यति-

**१६२. अनित्यमिति च विशेषतः प्रतिषेधभावः ॥ ४ ॥**

परमाणुरूपं कारणद्रव्यं अनित्यं, रूपादिमत्त्वात्, घटादिवत् इति यः नित्यत्वप्रतिषेधः क्रियते सः विशेषतः प्रतिषेधः। कारणद्रव्यस्यानुमीयमानस्य अनित्यत्वरूपेण विशेषेण प्रतिषेधः। न तु स्वरूपेण। परमाणुमभ्युपेत्य तस्य नित्यत्वं प्रतिषिद्धयत इति यावत्। अयं प्रतिषेधः तदा भवेत् यदि नित्यत्वानित्यत्वविशेषावधारणं विना परमाणुस्वरूपं अस्माभिः साधितं भवेत्। निरवयवं अतएव नित्यं किञ्चित कारणमस्ति। स एव परमाणुरिति ह्यस्माभिः साध्यते। तत्र धर्मिग्राहकप्रमाणेन नित्यत्वेनैव तत्सिद्धौ तस्यानित्यत्वानुमानं कालात्ययापदिष्टं भवतीति भावः। बाधितमिति यावत्। "विशेषतः प्रतिषेधाभावः" इति पाठे "अनित्यमिति विशेषतो यः प्रतिषेधः तस्याभावः" उक्तरीत्याऽनवकाश एवेत्यर्थः। न परं साधकप्रमाणसत्त्वात्, बाधक प्रमाणाभावाच्च नित्यपरमाणुसिद्धिरिति चकारार्थः ॥

**१६३. अविद्या च ॥ ५ ॥**

अथोच्यते परमाणुरेव नाङ्गीक्रियते, नतरां तस्य नित्यत्वमिति, तत्र ब्रूमः। तथा सति अविद्या अनुमित्यात्मकविद्यायाः ज्ञानस्याभावः। पक्षाभावेन हेतोराश्रया-

उपचारस्येति ।

आत्मनोऽनागमिकत्वप्रकरणमिदमुपसंहरति :—

**१५५. अहमिति मुख्ययोग्याभ्यां शब्दवद् व्यतिरेकाव्यभिचाराद् विशेषसिद्धेर्नागमिकः ॥ १८ ॥**

आत्मा नागमिकः । प्रकारान्तरेणैव विशेषस्य अहन्त्वरूपस्य आत्मत्वस्य सिद्धेः अवधारणात् । किं तत् प्रकारान्तरम् ? अहमिति प्रत्ययस्य व्यतिरेकाव्यभिचारः इतरेभ्यः सर्वेभ्यः व्यावृत्तत्वनियमः । नियमेन व्यावृत्तिरिति यावत् । अहमिति प्रत्ययः प्रत्यक्षात्मकः । लिङ्गविशेषाजन्यत्वात् । साक्षात्काररूपत्वात् । स चायं प्रत्ययः सर्वेभ्यो विषयान्तरेभ्यो व्यावृत्तः आत्मैकविषयः । कस्मात् । मुख्ययोग्याभ्यां अन्वय-व्यतिरेकाभ्याम् । मुख्यौ साक्षादुपलभ्यमानौ । योग्यौ सन्देहविपर्ययरहितौ । आत्मनि भवतीत्यन्वयः । अन्यस्मिन् यस्मिन् कस्मिन्नपि न भवतीति व्यतिरेकः । शब्दवदिति दृष्टान्तः । "अहमिति शब्दस्य व्यतिरेकान्नागमिकं" इति पूर्वमुक्तम् । तद्वत् अहमिति प्रत्ययस्यापि व्यतिरेकाद् विशेषसिद्धेर्नागमिक आत्मा ।

अथात्मनः सङ्ख्यामाह—

**१५६. सुखदुःखज्ञाननिष्पत्त्यविशेषादैकात्म्यम् ॥ १९ ॥**

ऐकात्म्यं आत्मनः एकत्वम् । तदभ्युपगन्तव्यम् । कुतः ? सुखाद्युत्पत्तिविषये अविशेषात् । शब्दस्य सर्वत्रोपलम्भादाकाश एक इत्युक्तम् । परापरव्यवहारस्य सार्वत्रिकत्वात् तत्कारणभूतः कालः एक इत्युक्तम् । तथा सुखदुःखादेः सर्वेषु शरीरेषूपलम्भात् तदाश्रय आत्मापि एको भवितुमर्हतीति पूर्वः पक्षः ॥

सिद्धान्तमाह—

**१५७. नानात्मानो व्यवस्थातः ॥ २० ॥**

आत्मानः नाना बहवः । कुतः ? सुखदुःखव्यवस्थानात् । यदा एकस्मिन् शरीरे सुखं वा दुःखं वाऽनुभूयते तदा तत् सर्वस्मिन् शरीरे नानुभूयते । यद्येक एवात्म तर्हि सर्वत्र तदनुभवेन भाव्यम् । न परं एवं एकस्य सर्वत्रानुभवाभावः । अपि तु विपरीतानुभवोऽप्यस्ति । यदा एकः सुखी तदाऽन्यो दुःखी भवति । सुखदुःखे च भिन्न-भिन्ने तारतम्यवती च भवतः । एवं व्यवस्थादर्शनात् प्रतिशरीरं, विभिन्न एक

नित्यानित्यभेदेन द्रव्यविभागमभिप्रेत्य तत्र नित्यं अनित्येन साधयामास। कुत एवमनुमानेन साधनं, प्रत्यक्षमेव किं न सम्भवतीति शङ्कां परिहरन् प्रत्यक्ष-कारणमुक्त्वा तदभावात् प्रत्यक्षं न संम्भवति इति प्रतिपादयामास। अथ प्रत्यक्ष-कारणप्रसङ्गात् गुणप्रत्यक्षकारणमपि वदन् प्रथमं प्रस्तुतरूपप्रत्यक्षस्यैव कारणमाह—

**१६७. अनेकद्रव्यसमवायाद्रूपविशेषाच्च रूपोपलब्धिः ॥ ९ ॥**

अनेकं बहु द्रव्यं समवायिकारणं यस्य तत् अनेकद्रव्यम्। महत्परिमाणवद्द्रव्य-मित्यर्थः। तत्र समवायात् समवायसंबन्धेन वृत्तेः, रूपविशेषात्, अनुद्भूतत्वाभिभूतत्व-प्रयुक्तायोग्यत्वावस्थारहितात् रूपाच्च रूपं प्रत्यक्षं भवति। घटपटादिरूपे इदमुभय-मस्ति। अतस्तत्प्रत्यक्षम्। अनेकद्रव्यसमावायाभावात् परमाणुरूपानुपलब्धिः। अनु-द्भूतत्वात् निदाघोष्मादौ रूपानुपलब्धिरित्याहुः। अभिभूतत्वात् उष्णजलसंपृक्ताग्नि-रूपानुपलब्धिः॥

**१६८. तेन रसगन्धस्पर्शेषु ज्ञानं व्याख्यातम् ॥ १० ॥**

तेन रूपेण, रसगन्धस्पर्शेषु यद् ज्ञानं तत् अनेन कारणेनेति व्याख्यातम्। अनेकद्रव्यसमवायात् रसविशेषाच्च रसोपलब्धिः। अनेकद्रव्यसमवायाद् गन्ध-विशेषाच्च गन्धोपलब्धिः। अनेकद्रव्यसमवायात् स्पर्शविशेषाच्च स्पर्शोपलब्धिः। इति रूपस्येव एषामपि उपलब्धिकारणमनुसन्धेयमिति भावः।

ननु रूपं यथा स्वप्रत्यक्षे कारणं तद्वत् गुणान्तरप्रत्यक्षेऽपि कारणम्। तत्र पृथिवीजलयोः रूपवत्त्वात् तद्गुणयोः गन्धरसयोः प्रत्यक्षं भवतीति उपपन्नमिदम्। वायौ तु रूपाभावेऽपि स्पर्शोपलम्भात् कारणाभावेऽपि कार्यसत्त्वरूपो व्यभिचारो भवतीति चेत् अत्राह—

**१६९. तस्याभावादव्यभिचारः ॥ ११ ॥**

तस्य रूपस्य वायावभावात् यो व्यभिचार आशङ्क्यते स वस्तुतो नास्ति। कुतः। वायौ स्पर्शप्रत्यक्षे रूपस्य कारणत्वाभावात्। कारणत्वाभावश्च तद्ग्राहकप्रमा-

उपचारस्येति ।

आत्मनोऽनागमिकत्वप्रकरणमिदमुपसंहरति :—

**१५५. अहमिति मुख्ययोग्याभ्यां शब्दवद् व्यतिरेकाव्यभिचाराद् विशेषसिद्धेर्नागमिकः ॥ १८ ॥**

आत्मा नागमिकः । प्रकारान्तरेणैव विशेषस्य अहन्त्वरूपस्य आत्मत्वस्य सिद्धेः अवधारणात् । किं तत् प्रकारान्तरम् ? अहमिति प्रत्ययस्य व्यतिरेकाव्यभिचारः इतरेभ्यः सर्वेभ्यः व्यावृत्तत्वनियमः । नियमेन व्यावृत्तिरिति यावत् । अहमिति प्रत्ययः प्रत्यक्षात्मकः । लिङ्गविशेषाजन्यत्वात् । साक्षात्काररूपत्वात् । स चायं प्रत्ययः सर्वेभ्यो विषयान्तरेभ्यो व्यावृत्तः आत्मैकविषयः । कस्मात् । मुख्ययोग्याभ्यां अन्वय-व्यतिरेकाभ्याम् । मुख्यौ साक्षादुपलभ्यमानौ । योग्यौ सन्देहविपर्ययरहितौ । आत्मनि भवतीत्यन्वयः । अन्यस्मिन् यस्मिन् कस्मिन्नपि न भवतीति व्यतिरेकः । शब्दवदिति दृष्टान्तः । "अहमिति शब्दस्य व्यतिरेकान्नागमिकं" इति पूर्वमुक्तम् । तद्वत् अहमिति प्रत्ययस्यापि व्यतिरेकाद् विशेषसिद्धेर्नागमिक आत्मा ।

अथात्मनः सङ्ख्यामाह—

**१५६. सुखदुःखज्ञाननिष्पत्त्यविशेषादैकात्म्यम् ॥ १९ ॥**

ऐकात्म्यं आत्मनः एकत्वम् । तदभ्युपगन्तव्म् । कुतः ? सुखाद्युत्पत्तिविषये अविशेषात् । शब्दस्य सर्वत्रोपलम्भादाकाश एक इत्युक्तम् । परापरव्यवहारस्य सार्वत्रिकत्वात् तत्कारणभूतः कालः एक इत्युक्तम् । तथा सुखदुःखादेः सर्वेषु शरीरेषूपलम्भात् तदाश्रय आत्मापि एको भवितुमर्हतीति पूर्वः पक्षः ॥

सिद्धान्तमाह—

**१५७. नानात्मानो व्यवस्थातः ॥ २० ॥**

आत्मानः नाना बहवः । कुतः ? सुखदुःखव्यवस्थानात् । यदा एकस्मिन् शरीरे सुखं वा दुःखं वाऽनुभूयते तदा तत् सर्वस्मिन् शरीरे नानुभूयते । यद्येक एवात्म तर्हि सर्वत्र तदनुभवेन भाव्यम् । न परं एवं एकस्य सर्वत्रानुभवाभावः । अपि तु विपरीतानुभवोऽप्यस्ति । यदा एकः सुखी तदाऽन्यो दुःखी भवति । सुखदुःखे च भिन्न-भिन्ने तारतम्यवती च भवतः । एवं व्यवस्थादर्शनात् प्रतिशरीरं, विभिन्न एक

गुणग्रहणे तद्वृत्तिगुणत्वस्य सत्तायाश्च, एवं रसनया रसस्य, घ्राणेन गन्धस्य, त्वचा स्पर्शस्य च ग्रहणे एषु गुणेषु विद्यमानयोश्च तयोः प्रत्यक्षं भवति। श्रोत्रग्रहणो योऽर्थः सः शब्द इति पूर्वोक्तरीत्या श्रोत्रेण शब्दग्रहणे तद्वृत्त्योः तयोः श्रोत्रजन्यप्रत्यक्षविषयत्वमप्यस्तीति सर्वेन्द्रियजन्यं ज्ञानमनयोः। द्रव्यत्वस्य चक्षुः त्वगिति इन्द्रियद्वयजन्यमेव ज्ञानम्। कर्मत्वस्य चाक्षुषज्ञानविषयत्वमेवेति न सर्वेन्द्रियजन्यं ज्ञानम्॥

इति कणादसूत्रवृत्तौ सुगमायां

चतुर्थाध्याये प्रथममाह्निकम्॥

# अथ चतुर्थाध्याये

## द्वितीयमाह्निकम् ।

पृथिव्यादिचतुष्टयं पुनः प्रकारान्तरेण विभज्य किञ्चिदाह—

**१७३. तत् पुनः पृथिव्यादिकार्यंद्रव्यं त्रिविधं शरीरेन्द्रियविषयसंज्ञकम् ॥ १ ॥**

तत् पूर्वं "तस्य कार्यं लिङ्गं" इति सूत्रे निर्दिष्टं पृथिव्यादिचतुर्द्रव्यरूपं कायद्रव्यं त्रिविधं शरीरेन्द्रियविषयनामकम् । शरीरेन्द्रियविषयभेदात् इति यावत् ॥

तत्र शरीरविषये मतान्तरं निरस्यति—

**१७४. प्रत्यक्षाप्रत्यक्षाणां संयोगस्याप्रत्यक्षत्वात् पञ्चात्मकं न विद्यते ॥ २ ॥**

शरीरं पृथिव्या जलेन तेजसा वायुना वा एकेनैव भूतेन आरब्धमिति सिद्धान्तः । तत्र ये "पञ्चभिर्मूर्तैरारब्धम् । अतएव पञ्चात्मकम्," इति वदन्ति, तेषां निरसनमिह क्रियते । तत्र वाय्वाकाशौ इतरैः त्रिभिः संयुक्तौ शरीरमारभेते इति तावन्न युक्तम् । अप्रत्यक्षौ हि तौ । इतराणि त्रीणि प्रत्यक्षाणि । प्रत्यक्षाप्रत्यक्षद्रव्यसंयोगो न प्रत्यक्षः । न हि घटाकाशसंयोगः प्रत्यक्षो भवति । तथा च वाय्वाकाशाभ्यां संयोगस्य पृथिव्यादिषु त्रिषु अप्रत्यक्षत्वात् पृथिव्यादिभिरारब्धे शरीरे वाय्वाकाशावपि तदारम्भकतया स्थिताविति कथं ज्ञायते? वाय्वाकाशयोरप्रत्यक्षत्वात् साक्षात्प्रत्यक्षेण तयोरारम्भकत्वं न ज्ञायते । तत्संयोगस्याप्यप्रत्यक्षत्वात् तद्द्वारेणाऽपि न ज्ञायते । अतः प्रमाणाभावात् तयोः शरीरारम्भकत्वं नास्ति इति न पञ्चात्मकं शरीरमिति भावः ॥

अन्यदपि मतं निरस्यति—

**१७५. गुणान्तराप्रादुर्भावाच्च न त्र्यात्मकम् ॥ ३ ॥**

अप्रत्यक्षौ वाय्वाकाशौ विहाय पृथिवीजलतेजोभिः प्रत्यक्षैः त्रिभिर्भूतैरारब्धमिदं शरीरम् । त्रीणीमानि प्रत्यक्षान्येव । तथा तेषां संयोगोऽपि । तस्मात् त्र्यात्म-

कमिदम् । त्रिभिरारब्धमित्यर्थः । इदमपि मतं न सम्यक् कुतः । गुणान्तराप्रादुर्भावात् । यदि भूतत्रयपरमाणुभिः परस्परसंयुक्तैः शरीरात्मकं अवयविद्रव्यमुत्पाद्यते तर्हि ये तेषां व्यवस्थिता गुणाः ते तथैव शरीरवर्तिपार्थिवाद्यंशेषु नोपलभ्येरन् । उपलभ्यन्ते च । न तु विलक्षणं गुणान्तरं किमपि प्रादुर्भूतं दृश्यते । गन्धोऽनुष्णाशीतस्पर्शश्च पार्थिवांशे । शीतस्पर्शो जलांशे । उष्णस्पर्शः तेजोंऽशे । अवयविनि एकस्मिन् विरुद्धा इमे गुणा न खलु समवेयुः । न च गुणान्तरं एतेभ्यो व्यतिरिक्तं किमप्युपलभ्यते । अतो न त्र्यात्मकमिति ॥

यद्येवं एकभूतारब्धे शरीरे भूतान्तरोपलम्भः कथमित्यत्राह—

**१७६. अणुसंयोगस्त्वप्रतिषिद्धः ॥ ४ ॥**

शरीरारम्भकाणां एकभूतपरमाणूनां भूतान्तरपरमाणुभिः संयोगस्तु अप्रतिषिद्धः नास्माभिः प्रतिषिध्यते । नानुपपन्न इति भावः । पार्थिवशरीरारम्भकाः पृथिवीपरमाणवः जलपरमाणुभिः तेजःपरमाणुभिश्च संयुक्ता वर्तन्ते । ते यदा शरीरमारभन्ते तदा जलपरमाणवः जलात्मकमवयविनं तेजःपरमाणवः तेजोमयमवयविनं च आरभन्ते । अनयोरवयबिनोः पार्थिवशरीरात्मकेनावयविना संयोगो भवति । तेन हेतुना तत्र जलतेजोरूपभूतान्तरोपलब्धिः । एवं जलतेजोमयशरीरयोरपि द्रष्टव्यम् । एवं भूतान्तरोपलम्भस्योपपन्नत्वात् एकभूतपरमाण्वारब्धे शरीरे भूतान्तरपरमाणूनां नारम्भकत्वमिति सर्वशरीरं एकभूतात्मकमेव ॥

एवं शरीरस्वरूपं निरूप्य तद् विभजते—

**१७७. तत्र शरीरं द्विविधं योनिजमयोनिजं च ॥ ५ ॥**

योनिजं गर्भे स्थित्वा उत्पन्नम् । अन्यदयोनिजम् । योनिजं प्रत्यक्षसिद्धं निर्विवादम् । अयोनिजे विप्रतिपत्तिः स्यात् । अतस्तत्साधयन् हेतूनाह—

**१७८. अनियतदिग्देशपूर्वकत्वात् ॥ ६ ॥**

एतदादीनां हेतूनां उत्तरत्र "सन्त्ययोनिजा" इत्यत्रान्वयः । अयोनिजशरीर-

वन्तश्चेतनाः सन्तीति तस्य सूत्रस्यार्थः। नियतौ दिग्देशौ पूर्वौ कारणतया पूर्ववर्तिनौ यस्य तत् नियतदिग्देशपूर्वकम्। तत्त्वाभावात्। शरीरोत्पत्तेरिति शेषः। प्राचीप्रभृतयो दश दिशः। तत्र स्वर्गभूपाताललोकादयो देशाः। शरीरेऽपि उदरं वा कर्णौ वा मुखं वा ऊरुर्वा पादो वेति देशाः। एतेषु दिग्देशेषु अत्रैव शरीरमुत्पद्यते नान्यत्रेति नियमो नास्ति। अस्मिन् लोके शरीरगर्भात् शरीरमुत्पद्यत इति पश्यामः। इदं दर्शनं शरीरगर्भात् शरीरमुत्पद्यत इत्यत्र प्रमाणम्। न त्वन्यत्र नोत्पद्यत इत्यत्र। गोमयाद्वृश्चिकादिशरीरस्य, तण्डुलादिभ्यः क्रिमिशरीरस्य च उत्पत्तिदर्शनात्। न च मनुष्यशरीरमन्यत्र नोत्पद्यत इति नियमः। अस्माकमिदानीमदर्शनमात्रेण तथा नियमासिद्धेः। न च तत्रानुमानमागमो वा प्रमाणमस्ति॥

इत्थमयोनिजपुरुषशरीरसत्त्वे बाधकप्रमाणं नास्तीत्युक्तम्। अथ साधक प्रमाणान्याह—

**१७९. धर्मविशेषाच्च॥ ७॥**

सर्वफलसाधनं हि धर्मः। गर्भवासं विनैव शरीरपरिग्रहानुकूलो धर्मो यदि कस्यचित् भवति तस्य तथा तत्प्राप्तौ को विघातः। श्रूयन्ते च तथा शरीरभाजः सीताद्रौपदीसरोमुनिप्रभृतयः॥

**१८०. समाख्याभावाच्च॥ ८॥**

पद्मभवः, ऊरूद्भवा, हिरण्यगर्भाङ्गभूः इत्यादि समाख्यासत्त्वाच्च। अन्वर्था हि इमाः समाख्याः न साङ्केतिक्यः केवलम्॥

**१८१. संज्ञाया आदित्वात्॥ ९॥**

प्रलयावसाने तस्मिन् तस्मिन् पदार्थे उत्पन्ने अस्य इयं संज्ञा, अनेन शब्देन अयमर्थोऽभिधेयः, इति संज्ञा कैश्चित् कृता। तत्र यः प्रथमः पुरुष उत्पन्नः तस्य पुरुष इति संज्ञां, या प्रथमा स्त्री उत्पन्ना तस्याः स्त्रीति संज्ञां, तेन तस्यां यो जातः तस्य पुत्र इति संज्ञां च ये अकुर्वन् तेषां यानि शरीराणि तानि पुरुषादिसंज्ञायाः पुरुषादिसंज्ञापेक्षया आदित्वात् पूर्वभावित्वात् अयोनिजान्येव भवन्ति। उक्तविविधसंज्ञायाः

कारणत्वादिति वा ।।

१८२. **सन्त्ययोनिजाः ।। १० ।।**

अयोनिजशरीरवन्तः विशिष्टाश्चेतनाः सन्तीत्येतत्सूत्रार्थ उक्तः । इत्थमयोनिजं शरीरं युक्त्या साधितम् । तत्रेयं चरमा युक्तिरिति केनचित्प्रकारेण व्यञ्जयितुमिच्छन् सूत्रकारः पूर्वसूत्रे चकारं न प्रायुङ्क्तेति विभाव्यम् ।।

१८३. **वेदलिङ्गाच्च ।। ११ ।।**

"प्रजापतिः प्रजा असृजत" इत्याह श्रुतिः । तत्र सङ्कल्पादेव सृष्टिरभिप्रेता, न मिथुनीभावेन । सङ्कल्पजा च सृष्टिरयोनिजैव । वेदे स्थितात् वेदवाक्यरूपत्वाद्वा उक्तविधात् लिङ्गाच्च सन्त्ययोनिजा इत्यर्थः । यद्यपि वेदलिङ्गं न स्यात् तथापि सिद्धयेदेव अयोनिजं शरीरमिति ज्ञापनार्थं पूर्वं प्रतिज्ञां पूरयित्वा पश्चात् लिङ्गोक्तिः । शरीरं निरूपितम् । पञ्चेन्द्रियाणि प्रसिद्धानि । विषयाश्च भोग्यपदार्था निरूपिताः प्रसिद्धाश्च । अत एषां निरूपणं न क्रियते ।

इति वैशेषिकसूत्रवृत्तौ सुगमायां
चतुर्थाध्याये द्वितीयमाह्निकम् ।।

---

वन्तश्चेतनाः सन्तीति तस्य सूत्रस्यार्थः। नियतौ दिग्देशौ पूर्वौ कारणतया पूर्ववर्तिनौ यस्य तत् नियतदिग्देशपूर्वकम्। तत्त्वाभावात्। शरीरोत्पत्तेरिति शेषः। प्राची-प्रभृतयो दश दिशः। तत्र स्वर्गभूपाताललोकादयो देशाः। शरीरेऽपि उदरं वा कर्णौ वा मुखं वा ऊरुर्वा पादो वेति देशाः। एतेषु दिग्देशेषु अत्रैव शरीरमुत्पद्यते नान्यत्रेति नियमो नास्ति। अस्मिन् लोके शरीरगर्भात् शरीरमुत्पद्यत इति पश्यामः। इदं दर्शनं शरीरगर्भात् शरीरमुत्पद्यत इत्यत्र प्रमाणम्। न त्वन्यत्र नोत्पद्यत इत्यत्र। गोमयाद्वृश्चिकादिशरीरस्य, तण्डुलादिभ्यः क्रिमिशरीरस्य च उत्पत्तिदर्शनात्। न च मनुष्यशरीरमन्यत्र नोत्पद्यत इति नियमः। अस्माकमिदानीमदर्शनमात्रेण तथा नियमासिद्धेः। न च तत्रानुमानमागमो वा प्रमाणमस्ति॥

इत्थमयोनिजपुरुषशरीरसत्त्वे बाधकप्रमाणं नास्तीत्युक्तम्। अथ साधक प्रमाणान्याह—

**१७९. धर्मविशेषाच्च॥ ७॥**

सर्वफलसाधनं हि धर्मः। गर्भवासं विनैव शरीरपरिग्रहानुकूलो धर्मो यदि कस्यचित् भवति तस्य तथा तत्प्राप्तौ को विघातः। श्रूयन्ते च तथा शरीरभाजः सीताद्रौपदीसरोमुनिप्रभृतयः॥

**१८०. समाख्याभावाच्च॥ ८॥**

पद्मभवः, ऊरूद्भवा, हिरण्यगर्भाङ्गभूः इत्यादि समाख्यासत्त्वाच्च। अन्वर्था हि इमाः समाख्याः न साङ्केतिक्यः केवलम्॥

**१८१. संज्ञाया आदित्वात्॥ ९॥**

प्रलयावसाने तस्मिन् तस्मिन् पदार्थे उत्पन्ने अस्य इयं संज्ञा, अनेन शब्देन अयमर्थोऽभिधेयः, इति संज्ञा कैश्चित् कृता। तत्र यः प्रथमः पुरुष उत्पन्नः तस्य पुरुष इति संज्ञां, या प्रथमा स्त्री उत्पन्ना तस्याः स्त्रीति संज्ञां, तेन तस्यां यो जातः तस्य पुत्र इति संज्ञां च ये अकुर्वन् तेषां यानि शरीराणि तानि पुरुषादिसंज्ञायाः पुरुषादि-संज्ञापेक्षया आदित्वात् पूर्वभावित्वात् अयोनिजान्येव भवन्ति। उक्तविविधसंज्ञायाः

# अथ पञ्चमाध्याये

## प्रथममाह्निकम्

भोक्ता आत्मा निरूपितः। द्रव्यानन्तरं निर्दिष्टेषु गुणेषु भोग्यतया प्रधानभूता रूपादयो विशेषगुणा अपि बहुधा निरूपिताः। अथ गुणान्तरनिरूपणं पश्चात् करिष्यन् भोक्तुर्भोगहेतुभूतं कर्म निरूपयितुमारभते। तत्र प्रथमं शरीरगतं कर्म कारणतो निरूपयति—

१८४. **आत्मसंयोगप्रयत्नाभ्यां हस्ते कर्म ॥ १ ॥**

हस्ते यत् कर्म जायते तस्य द्वे कारणे। एकं आत्मसंयोगः। य आत्मा तच्छरीरमधितिष्ठति तेन संयोगः हस्तस्य। तस्य आत्मनः हस्तेन संयोग इति वा। शरीरे जायमानस्य सर्वस्य कर्मणः इदं साधारणं कारणम्। मृतशरीरे कर्मणोऽभावात्। हस्ते यत् कर्म तत्र तदनुकूलः प्रयत्नः असाधारणकारणम्। प्रयत्नः आत्मन एव गुण इति तस्यात्मवृत्तित्वं स्वयं लभ्यते। मुसलं पश्यति। तत्कर्मकादानक्रिया हस्ते जायतामिति इच्छति। तद्विषयः प्रयत्नो जायते। ततो हस्ते क्रिया भवति। ईदृशो यत्नो यदि न जायते तर्हि इयं क्रिया नैव हस्ते जायेतेति द्वितीयमिदं कारणम्।

१८५. **तथा हस्तसंयोगाच्च मुसले कर्म ॥२॥**

तथेति हस्तस्य विशेषणम्। तादृशेत्यर्थः। आत्मसंयोगप्रयत्नाभ्यां कर्मवत्त्वार्हदशापन्नो यो हस्तः तत्संयोगादित्यर्थः। हस्तेन मुसलं गृहीत्वा उत्क्षिपति अवक्षिपति च। उत्क्षेपणावक्षेपणात्मिके क्रिये हस्ते, उद्गमनाधोगमनात्मिके क्रिये मुसले च जायेते। तत्र हस्तक्रिययोः कारणमुक्तम्। मुसलक्रिययोः कारणं विशिष्टहस्तसंयोगः। आत्मसंयोगप्रयत्नयोः हस्तसंयोगद्वारैव मुसलक्रियाहेतुत्वात् तावत्र अन्यथासिद्धौ। हस्ते कर्म मुसले च कर्मेति चकारयोजना।

१८६. **अभिघातजे मुसलादौ कर्मणि व्यतिरेकादकारणं हस्तसंयोगः ॥३॥**

वन्तश्चेतनाः सन्तीति तस्य सूत्रस्यार्थः। नियतौ दिग्देशौ पूर्वौ कारणतया पूर्ववर्तिनौ यस्य तत् नियतदिग्देशपूर्वकम्। तत्त्वाभावात्। शरीरोत्पत्तेरिति शेषः। प्राचीप्रभृतयो दश दिशः। तत्र स्वर्गभूपाताललोकादयो देशाः। शरीरेऽपि उदरं वा कर्णौ वा मुखं वा ऊरुर्वा पादो वेति देशाः। एतेषु दिग्देशेषु अत्रैव शरीरमुत्पद्यते नान्यत्रेति नियमो नास्ति। अस्मिन् लोके शरीरगर्भात् शरीरमुत्पद्यत इति पश्यामः। इदं दर्शनं शरीरगर्भात् शरीरमुत्पद्यत इत्यत्र प्रमाणम्। न त्वन्यत्र नोत्पद्यत इत्यत्र। गोमयाद्वृश्चिकादिशरीरस्य, तण्डुलादिभ्यः क्रिमिशरीरस्य च उत्पत्तिदर्शनात्। न च मनुष्यशरीरमन्यत्र नोत्पद्यत इति नियमः। अस्माकमिदानीमदर्शनमात्रेण तथा नियमासिद्धेः। न च तत्रानुमानमागमो वा प्रमाणमस्ति॥

इत्थमयोनिजपुरुषशरीरसत्त्वे बाधकप्रमाणं नास्तीत्युक्तम्। अथ साधक प्रमाणान्याह—

**१७९. धर्मविशेषाच्च॥ ७॥**

सर्वफलसाधनं हि धर्मः। गर्भवासं विनैव शरीरपरिग्रहानुकूलो धर्मो यदि कस्यचित् भवति तस्य तथा तत्प्राप्तौ को विघातः। श्रूयन्ते च तथा शरीरभाजः सीताद्रौपदीसरोमुनिप्रभृतयः॥

**१८०. समाख्याभावाच्च॥ ८॥**

पद्मभवः, ऊरूद्भवा, हिरण्यगर्भाङ्गभूः इत्यादि समाख्यासत्त्वाच्च। अन्वर्था हि इमाः समाख्याः न साङ्केतिक्यः केवलम्॥

**१८१. संज्ञाया आदित्वात्॥ ९॥**

प्रलयावसाने तस्मिन् तस्मिन् पदार्थे उत्पन्ने अस्य इयं संज्ञा, अनेन शब्देन अयमर्थोऽभिधेयः, इति संज्ञा कैश्चित् कृता। तत्र यः प्रथमः पुरुष उत्पन्नः तस्य पुरुष इति संज्ञां, या प्रथमा स्त्री उत्पन्ना तस्याः स्त्रीति संज्ञां, तेन तस्यां यो जातः तस्य पुत्र इति संज्ञां च ये अकुर्वन् तेषां यानि शरीराणि तानि पुरुषादिसंज्ञायाः पुरुषादिसंज्ञापेक्षया आदित्वात् पूर्वभावित्वात् अयोनिजान्येव भवन्ति। उक्तविविधसंज्ञायाः

गुरुत्वात् कथं पतनमेव, न क्रियान्तरमित्यत्राह—

**१६१. नोदनविशेषाभावान्नोर्ध्वं न तिर्यग्गमनम् ॥ ८ ॥**

गुरुत्वं पतनमात्रे हेतुः। उद्गमने वा तिर्यग्गमने वा तदनुरूपं नोदनमपि कारणम्। एतदभावे सति केवलं पतनमिति।

**१६२. प्रयत्नविशेषान्नोदनविशेषः ॥ ९ ॥**

नोदनविशेषस्य कारणमत्रोच्यते। वस्त्वन्तरसमवेतक्रियाहेतुभूतसंयोगसमानाधिकरणं कर्म नोदनम्। ऊर्ध्वगमनप्रयोजकत्वं तिर्यग्गमनप्रयोजकत्वं वा तस्य विशेषः। अयं प्रयत्नविशेषाद् भवति। ऊर्ध्वं नुदामीतीच्छाजनितः प्रयत्नःऊर्ध्वनोदनस्य कारणम्। ततो विलक्षणः तिर्यङ्नुदामीतीच्छाजनितः प्रयत्नः तिर्यङ् नोदनस्य कारणम्।

**१६३. नोदनविशेषादुदसनविशेषः ॥ १० ॥**

नोदनविशेषस्य कार्यमत्रोच्यते। ऊर्ध्वनोदनरूपो यो नोदनविशेषः तस्मात् कारणात् नुद्यमानस्य वस्तुनः स्वोदसनं स्वोत्क्षेपणं नाम क्रियाविशेषो भवति। एतेन तिर्यङ्नोदनरूपो यो नोदनविशेषः तेन नुद्यमानस्य वस्तुनः तिर्यग्गमनरूपः क्रियाविशेषो भवतीत्यप्युक्तं वेदितव्यम्। अत्र "नोदनविशेषादुद्गमनम्" इत्येवं सूत्रपाठेन भवितुं युक्तम्।

**१६४. हस्तकर्मणा दारककर्म व्याख्यातम् ॥ ११ ॥**

द्विविधं हस्तकर्म पूर्वमुक्तं—आत्मसंयोगप्रयत्नाभ्यां जायमानं, अभिघातवता मुसलेन संयोगाज्जायमानं चेति। तेन दारककर्म शिशुकर्म व्याख्यातं निरूपितं भवति। स्वात्मसंयोगप्रयत्नाभ्यां तस्य कदाचित् कर्म भवति। यदा स्वयमेव पाणिपादं विक्षिपति। कदाचित् परसंयोगाधीनम्। यदा माता हस्तावालम्ब्य तं सञ्चारयति।

शरीरे अन्यत्र च प्रयत्नाधीनं तदनधीनं च कर्म निरूप्य तदिदानीं उदाहरणान्तरेण स्मारयामास। अथ यदर्थमिदं स्मारणं तदाह—

**१६५. तथा दग्धस्य विस्फोटने ॥ १२ ॥**

अग्निना दग्धस्य वेणोः यद् विस्फोटनं सशब्दं विदलनं तत्र कारणं तथा हस्तदारककर्मवद् द्रष्टव्यम्। सामान्यतः हस्तदारककार्यवदित्युक्तावपि योग्यतावशात् तयोः प्रयत्नानधीनं यत् कर्म तद्वदिति ज्ञेयम्। अभिघातवन्मुसलसंयोगो हस्तकर्मणीव, क्रियावन्मातृहस्तसंयोगो दारककर्मणीव च वह्निसंयोगो दह्यमानवेणुविदलने कारणम्। अत इदं प्रयत्नानधीनं कर्म।

१९६. यत्नाभावे प्रसुप्तस्य चलनम् ।। १३ ।।

तथेत्यनुषज्य तादृशमित्यर्थो वाच्यः। पुरुषप्रयत्नाभावे सति सुषुप्तस्य पुरुषस्य चलनं यद् भवति तद् दावानलदह्यमानवेणुविस्फोटनवत् प्रयत्नेतरकारणकं द्रष्टव्यमित्यर्थः। जाग्रद्दशायां प्रयत्नाधीनं शारीरं कर्म पूर्वमुक्तम्। अथ स्वापावस्थायामुच्यते। आहारपरिणामप्रयुक्ततेजोवायुसंयोगविशेषाधीनमिदं चलनमिति भावः।

१९७. तृणे कर्म वायुसंयोगात् ।। १४ ।।

सर्वथा पुरुषसंयोगरहिते, मार्गे प्ररूढे तृणे यच्चलनं तद् वायुसंयोगादिति असन्दिग्धमेतत्। तद्वदेव प्रसुप्तचलनमपि पुरुषप्रयत्नेतरकिञ्चित्कारणकम्।

१९८. मणिगमनं सूच्यभिसर्पणमित्यदृष्टकारणकम् ।। १५ ।।

स्तेननिर्धारणार्थं विसृष्टो मणिः यत् स्तेनमभिगच्छति, सूची यत् अयस्कान्तमभिसर्पति, यच्च एतादृशमन्यत् कर्म तत् सर्वं अदृष्टकारणकम्। न दृष्टं प्रत्यक्षेण वाऽनुमानेन वाऽनवगतं कारणं यस्य तत्। अस्ति कारणम्। तत्तु इदमिति विशिष्य वक्तुं न शक्यत इति भावः। एतेन दृष्टकारणादृष्टकारणभेदात् कर्म द्विविधमित्यपि विभागवदिति ज्ञापितम्।

१९९. इषावयुगपत्संयोगविशेषाः कर्मान्यत्वे हेतुः ।। १६ ।।

धनुषि सन्धाय मुक्ते इषौ यावल्लक्ष्यप्राप्ति एकमेव कर्मेति न मन्तव्यम्। भिन्नभिन्नमनेकं कर्म तत्र भवति। कोऽत्र हेतुः। किं तत्र लिङ्गम्। किं प्रमाणमिति यावत्। अयुगपत्संयोगविशेषः। संयोगानां विशेषाः भिन्नभिन्ना व्यक्तयः। ते च अयुगपत् न एककालभाविनः अपितु क्रमभाविनः। प्रथमं दिग्विशेषावच्छिन्नाकाशसंयोगो जायते। तेन तज्जनकं कर्म नश्यति। अनन्तरं अन्यः संयोगोऽपरदिग्विशेषावच्छिन्नाकाशेन। तेन तज्जनकं कर्म नश्यति। एवमुत्तरोत्तरसंयोगनाश्यत्वात् तत्तज्जनकस्य कर्मणः न एकं कर्म आन्तमनुवर्तते। अपितु यावन्तः संयोगाः तज्जनकानि तन्नाश्यानि च कर्माणि तावन्ति भवन्तीत्यर्थः।

२००. नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्काराद्भुत्तरं तथोत्तरमुत्तरं च ।। १७ ।।

यदि प्रथममुत्पन्नं कर्म तज्जन्यसंयोगान्नश्यति तर्हि अनन्तरं कुतो जायत इत्यत्राह। नोदनादाद्यमिषोः कर्मेति ज्ञातमेतत्। तेन आद्येन कर्मणा उत्तरदेशसंयोगवत् वेगाख्यः संस्कारोऽपि कार्यते उत्पाद्यते। तस्माच्च संस्कारात् उत्तरं द्वितीयं कर्म जायते। तथा तेनैव प्रकारेण उत्तरमुत्तरं च सर्वं कर्म जायत इति कर्मानेकत्वमुपपन्नम्।

वेगे सति कर्म भवतीति वेगस्य गमनाख्यकर्म प्रति कारणत्वेऽन्वय उक्तः। अथ व्यतिरेकमाह—

२०१. **संस्काराभावे गुरुत्वात्पतनम् ॥ १८ ॥**

लक्ष्याभिघातेन वा नोदनमान्द्येन वेगस्य मध्य एव शान्तौ वा उपरि गमनं न भवति। किन्तु पूर्वोक्तरीत्या गुरुत्वहेतुकं पतनमेव। अतो वेगः उत्तरोत्तरगमनं प्रति कारणमिति।

इति वैशेषिकसूत्रवृत्तौ सुगमायां

पञ्चमाध्याये प्रथममाह्निकम्

———

१९६. यत्नाभावे प्रसुप्तस्य चलनम् ।। १३ ।।

तथेत्यनुषज्य तादृशमित्यर्थो वाच्यः । पुरुषप्रयत्नाभावे सति सुषुप्तस्य पुरुषस्य चलनं यद् भवति तद् दावानलदह्यमानवेणुविस्फोटनवत् प्रयत्नेतरकारणकं द्रष्टव्यमित्यर्थः। जाग्रद्दशायां प्रयत्नाधीनं शारीरं कर्म पूर्वमुक्तम् । अथ स्वापावस्थायामुच्यते। आहारपरिणामप्रयुक्ततेजोवायुसंयोगविशेषाधीनमिदं चलनमिति भावः ।

१९७. तृणे कर्म वायुसंयोगात् ।। १४ ।।

सर्वथा पुरुषसंयोगरहिते, मार्गे प्ररूढे तृणे यच्चलनं तद् वायुसंयोगादिति असन्दिग्धमेतत् । तद्वदेव प्रसुप्तचलनमपि पुरुषप्रयत्नेतरकिञ्चित्कारणकम् ।

१९८. मणिगमनं सूच्यभिसर्पणमित्यदृष्टकारणकम् ।। १५ ।।

स्तेननिर्धारणार्थं विसृष्टो मणिः यत् स्तेनमभिगच्छति, सूची यत् अयस्कान्तमभिसर्पति, यच्च एतादृशमन्यत् कर्म तत् सर्वं अदृष्टकारणकम् । न दृष्टं प्रत्यक्षेण वाऽनुमानेन वाऽनवगतं कारणं यस्य तत् । अस्ति कारणम् । तत्तु इदमिति विशिष्य वक्तुं न शक्यत इति भावः । एतेन दृष्टकारणादृष्टकारणभेदात् कर्म द्विविधमित्यपि विभागवदिति ज्ञापितम् ।

१९९. इषावयुगपत्संयोगविशेषाः कर्मान्यत्वे हेतुः ।। १६ ।।

धनुषि सन्धाय मुक्ते इषौ यावल्लक्ष्यप्राप्ति एकमेव कर्मेति न मन्तव्यम् । भिन्नभिन्नमनेकं कर्म तत्र भवति । कोऽत्र हेतुः । किं तत्र लिङ्गम् । किं प्रमाणमिति यावत् । अयुगपत्संयोगविशेषः । संयोगानां विशेषाः भिन्नभिन्ना व्यक्तयः । ते च अयुगपत् न एककालभाविनः अपितु क्रमभाविनः । प्रथमं दिग्विशेषावच्छिन्नाकाशसंयोगो जायते । तेन तज्जनकं कर्म नश्यति । अनन्तरं अन्यः संयोगोऽपरदिग्विशेषावच्छिन्नाकाशेन । तेन तज्जनकं कर्म नश्यति । एवमुत्तरोत्तरसंयोगनाश्यत्वात् तत्तज्जनकस्य कर्मणः न एकं कर्म आन्तमनुवर्तते । अपितु यावन्तः संयोगाः तज्जनकानि तन्नाश्यानि च कर्माणि तावन्ति भवन्तीत्यर्थः ।

२००. नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्कारादुत्तरं तथोत्तरमुत्तरं च ।। १७ ।।

यदि प्रथममुत्पन्नं कर्म तज्जन्यसंयोगान्नश्यति तर्हि अनन्तरं कुतो जायत इत्यत्राह । नोदनादाद्यमिषोः कर्मेति ज्ञातमेतत् । तेन आद्येन कर्मणा उत्तरदेशसंयोगवत् वेगाख्यः संस्कारोऽपि कार्यते उत्पाद्यते । तस्माच्च संस्कारात् उत्तरं द्वितीयं कर्म जायते । तथा तेनैव प्रकारेण उत्तरमुत्तरं च सर्वं कर्म जायत इति कर्मानेकत्वमुपपन्नम् ।

**२०७. नोदनापीडनात् संयुक्तसंयोगाच्च ॥ ६ ॥**

अपामारोहणमित्यनुषज्यते । नोदनापीडनादिति समाहारः । श्रोत्रियाणामर्घ्यं-जलं यदूर्ध्वं गच्छति तन्नोदनात् । शिलातले पतितं तोयं यदुद्गच्छति तदापीडनात् अभिघातात् । गच्छता पुरुषेण शिरसि धृतात् कुम्भात् यदाप उच्चलन्ति तत् संयुक्त-संयोगात् ।

**२०८. वृक्षाभिसर्पणमित्यदृष्टकारितम् ॥ ७ ॥**

भूमिष्ठा आपः यद् वृक्षमारुह्य सर्वत्र व्याप्नुवन्ति फलानामन्तश्च प्रविश्य तिष्ठन्ति एतदादिकं अपां कर्म अदृष्टकारितम् । आपः कुर्वन्ति । अदृष्टं कारणं ताः कारयति ।

पार्थिवीनामपां कर्मणः कारणमुक्तम् । अथ दिव्यानामुच्यते—

**२०९. अपां सङ्घातो विलयनं च तेजःसंयोगात् ॥ ८ ॥**

सङ्घातः संहननरूपं कर्म । अवयवानां काठिन्यापरपर्यायनिविडसंयोगानुकूलो व्यापारः संहननम् । द्रवत्वप्रत्यापत्त्यनुकूलो व्यापारः विलयनम् । संहता आपः करका भवन्ति । एवं करकावस्थाप्राप्तिः पुनर्द्रवीभावश्च तेजःसंयोगात् । कश्चन तेजःसंयोगः सङ्घातहेतुर्भवति । ततो विलक्षणः कश्चन तेजःसंयोगो विलयनहेतुर्भवति ।

ननु दिव्यास्वप्सु तेजःसंयोगोऽस्तीति कथं ज्ञायत इत्यत्राह—

**२१०. तत्र विस्फूर्जथुर्लिङ्गम् ॥ ९ ॥**

तत्र दिव्यानामपां तेजःसंयोगसत्त्वे विस्फूर्जथुः अशनिपातः लिङ्गं प्रमाणम् । अशनिर्हि तेजोमयः । वृक्षादिदाहात् । सः मेघान्निर्गत्य पतन् मेघस्थानां अपां अस्ति तेजःसंयोग इति गमयति ।

**२११. वैदिकं च ॥ १० ॥**

तत्र लिङ्गमित्यनुषज्यते । "चतुष्टय्यो वा आपः । मेघो विद्युत् । स्तनयित्नु-र्वृष्टिः ।" इति श्रूयते विद्युत् तेज एवेति । ननु मेघेषु विद्युत् प्रत्यक्षदृष्टैव । तत्र किं वेदोदाहरणेन । सत्यम् । परन्तु अद्भिः संयोगवत्तया सा न दृश्यते । वेदे तु अप्त्व-कीर्तनात् संयोगमूलोऽयं तेजोद्रव्यस्य अप्त्वव्यपदेश इति गम्यते । अतो युक्तं वैदिकं लिङ्गमिति ।

मेघात् अशनिपाते हेतुमाह—

**२१२. अपां संयोगाद् विभागाच्च स्तनयित्नोः ॥ ११ ॥**

स्तनयित्नोः मेघस्य सम्बन्धिन्यः या आपः तासां मिथः गाढसंयोगात् संयुक्तानां विभागाच्च विस्फूर्जथुर्भवतीति योजना ।

**१९६. यत्नाभावे प्रसुप्तस्य चलनम् ।। १३ ।।**

तथेत्यनुषज्य तादृशमित्यर्थो वाच्यः । पुरुषप्रयत्नाभावे सति सुषुप्तस्य पुरुषस्य चलनं यद् भवति तद् दावानलदह्यमानवेणुविस्फोटनवत् प्रयत्नेतरकारणकं द्रष्टव्य-मित्यर्थः । जाग्रद्दशायां प्रयत्नाधीनं शारीरं कर्म पूर्वमुक्तम् । अथ स्वापावस्थाया-मुच्यते । आहारपरिणामप्रयुक्ततेजोवायुसंयोगविशेषाधीनमिदं चलनमिति भावः ।

**१९७. तृणे कर्म वायुसंयोगात् ।। १४ ।।**

सर्वथा पुरुषसंयोगरहिते, मार्गे प्ररूढे तृणे यच्चलनं तद् वायुसंयोगादिति असन्दिग्धमेतत् । तद्वदेव प्रसुप्तचलनमपि पुरुषप्रयत्नेतरकिञ्चित्कारणकम् ।

**१९८. मणिगमनं सूच्यभिसर्पणमित्यदृष्टकारणकम् ।। १५ ।।**

स्तेननिर्धारणार्थं विसृष्टो मणिः यत् स्तेनमभिगच्छति, सूची यत् अयस्का-न्तमभिसर्पति, यच्च एतादृशमन्यत् कर्म तत् सर्वं अदृष्टकारणकम् । न दृष्टं प्रत्यक्षेण वाऽनुमानेन वाऽनवगतं कारणं यस्य तत् । अस्ति कारणम् । तत्तु इदमिति विशिष्य वक्तुं न शक्यत इति भावः । एतेन दृष्टकारणादृष्टकारणभेदात् कर्म द्विविधमित्यपि विभागवदिति ज्ञापितम् ।

**१९९. इषावयुगपत्संयोगविशेषाः कर्मान्यत्वे हेतुः ।। १६ ।।**

धनुषि सन्धाय मुक्ते इषौ यावल्लक्ष्यप्राप्ति एकमेव कर्मेति न मन्तव्यम् । भिन्नभिन्नमनेकं कर्म तत्र भवति । कोऽत्र हेतुः । किं तत्र लिङ्गम् । किं प्रमाणमिति यावत् । अयुगपत्संयोगविशेषः । संयोगानां विशेषाः भिन्नभिन्ना व्यक्तयः । ते च अयुगपत् न एककालभाविनः अपितु क्रमभाविनः । प्रथमं दिग्विशेषावच्छिन्नाकाशसंयोगो जायते । तेन तज्जनकं कर्म नश्यति । अनन्तरं अन्यः संयोगोऽपरदिग्विशेषावच्छिन्नाकाशेन । तेन तज्जनकं कर्म नश्यति । एवमुत्तरोत्तरसंयोगनाश्यत्वात् तत्तज्जनकस्य कर्मणः न एकं कर्म आन्तमनुवर्तते । अपितु यावन्तः संयोगाः तज्जनकानि तन्नाश्यानि च कर्माणि तावन्ति भवन्तीत्यर्थः ।

**२००. नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्कारादुत्तरं तथोत्तरमुत्तरं च ।। १७ ।।**

यदि प्रथममुत्पन्नं कर्म तज्जन्यसंयोगान्नश्यति तर्हि अनन्तरं कुतो जायत इत्य-त्राह । नोदनादाद्यमिषोः कर्मेति ज्ञातमेतत् । तेन आद्येन कर्मणा उत्तरदेशसंयोगवत् वेगाख्यः संस्कारोऽपि कार्यते उत्पाद्यते । तस्माच्च संस्कारात् उत्तरं द्वितीयं कर्म जायते । तथा तेनैव प्रकारेण उत्तरमुत्तरं च सर्वं कर्म जायत इति कर्मानेकत्वमुपपन्नम् ।

सति तेन हेतुना आत्मसंयुक्तं मनः त्वगिन्द्रियेण संयुज्य वेदज्ञानं जनयति । तेन दुःखम् । सर्वं सुखं दुःखं च मनःकर्माधीनम् ।

**२१७. तदनारम्भ आत्मस्थे मनसि शरीरस्य दुःखाभावः । स योगः ॥ १६ ॥**

तस्य सुखदुःखहेतुभूतस्य सन्निकर्षस्य अनारम्भे अनुत्पादने सति । कथं तदनुत्पादनमित्यत्राह–आत्मस्थे मनसीति । अभ्यासवशीकृते मनसि आत्मचिन्तामात्रपरे सतीत्यर्थः । आत्मनि तिष्ठतीति आत्मस्थम् । तस्मिन् । स्थितिश्च तदेकचिन्तनम् । अभ्यासपाटवेन मनसि आत्मनिष्ठे सति विषयान्तरेभ्यो विमुखं तत् तत्सन्निकर्षहेतुभूतकर्मरहितं भवति । अतो न सन्निकर्षोत्पादनमिति भावः । शरीरस्य दुःखाभावः शरीरसम्बन्धि तत्प्रयुक्तं यद् दुःखं तस्याभावो भवति । यद्यपि दुःखाभाव इत्येवालम् । तथापि शरीरसम्बन्धप्रयुक्तमेवात्मनः सर्वं दुःखमिति ज्ञापनाय शरीरस्य दुःखाभाव इत्युक्तिः । "सशरीरस्य दुःखाभावः" इति पाठः किमस्तीति युक्तमन्वेष्टुम् । शरीरे सत्यपि दुःखाभाव इति तदर्थः । स योगः । सः दुःखहेतुभूतार्थसन्निकर्षारम्भककर्मरहितस्य मनसः आत्मनि स्थितिः योगः योगशब्दाभिधेयो मोक्षोपाय इत्यर्थः । आत्मनि स्थितिः तत्स्मृतिसन्ततिः । पूर्वसूत्रे सुखदुःखयोरुभयोरुपादानात् इहापि उभयोरभावो वक्तुमुचितः । तथाऽपि प्राज्ञैः वैषयिकस्य सुखस्य अल्पत्वास्थिरत्वादिहेतुभिः दुःखकोटौ परिगणनात् दुःखाभाव इति उभयाभाव एवाभिप्रेत इति ज्ञेयम् । सुखदुःखाभाव इति स्पष्टानभिधानं तु आत्मचिन्ताजन्यस्य सुखस्य तदानीं विद्यमानत्वेन सामान्यतः सुखाभावाभिधानं न घटत इत्यभिप्रायेण ।

एवं मनसा साध्यो मोक्षोपाय उक्तः । अथ मोक्षं निरूपयितुकामः यस्मान्मोक्षो विवक्षितः तस्य बन्धस्य स्वरूपं प्रतिपादयिष्यन् तदुपयोगितया किञ्चिदाह—

**२१८. कायकर्मणा आत्मकर्म व्याख्यातम् ॥ १७ ॥**

आत्मा विभुः । तस्य कर्म नास्ति । तथापि कायस्य यत् कर्म तदेव आत्मकर्मतया उपचर्यते व्यवहारसौकर्याय । तत्रानुपपत्तिर्न शङ्कनीया । व्यवहारस्य औपचारिकत्वात् ।

कायकर्मणा ज्ञातेन आत्मकर्मापि ज्ञातं भवति । अव्यतिरिक्तत्वादिति सूत्रार्थः ।

अथ बन्धस्वरूपं सकारणमाह—

**२१९. अपसर्पणमुपसर्पणमशितपीतसंयोगाः कार्यान्तरसंयोगाश्चादृष्टकारितानि ॥ १८ ॥**

**१९६. यत्नाभावे प्रसुप्तस्य चलनम् ।। १३ ।।**

तथेत्यनुषज्य तादृशमित्यर्थो वाच्यः। पुरुषप्रयत्नाभावे सति सुषुप्तस्य पुरुषस्य चलनं यद् भवति तद् दावानलदह्यमानवेणुविस्फोटनवत् प्रयत्नेतरकारणकं द्रष्टव्यमित्यर्थः। जाग्रद्दशायां प्रयत्नाधीनं शारीरं कर्म पूर्वमुक्तम् । अथ स्वापावस्थायामुच्यते। आहारपरिणामप्रयुक्ततेजोवायुसंयोगविशेषाधीनमिदं चलनमिति भावः।

**१९७. तृणे कर्म वायुसंयोगात् ।। १४ ।।**

सर्वथा पुरुषसंयोगरहिते, मार्गे प्ररूढे तृणे यच्चलनं तद् वायुसंयोगादिति असन्दिग्धमेतत् । तद्वदेव प्रसुप्तचलनमपि पुरुषप्रयत्नेतरकिञ्चित्कारणकम् ।

**१९८. मणिगमनं सूच्यभिसर्पणमित्यदृष्टकारणकम् ।। १५ ।।**

स्तेननिर्धारणार्थं विसृष्टो मणिः यत् स्तेनमभिगच्छति, सूची यत् अयस्कान्तमभिसर्पति, यच्च एतादृशमन्यत् कर्म तत् सर्वं अदृष्टकारणकम् । न दृष्टं प्रत्यक्षेण वाऽनुमानेन वाऽनवगतं कारणं यस्य तत् । अस्ति कारणम् । तत्तु इदमिति विशिष्य वक्तुं न शक्यत इति भावः। एतेन दृष्टकारणादृष्टकारणभेदात् कर्म द्विविधमित्यपि विभागवदिति ज्ञापितम् ।

**१९९. इषावयुगपत्संयोगविशेषाः कर्मान्यत्वे हेतुः ।। १६ ।।**

धनुषि सन्धाय मुक्ते इषौ यावल्लक्ष्यप्राप्ति एकमेव कर्मेति न मन्तव्यम् । भिन्नभिन्नमनेकं कर्म तत्र भवति । कोऽत्र हेतुः । किं तत्र लिङ्गम् । किं प्रमाणमिति यावत् । अयुगपत्संयोगविशेषः । संयोगानां विशेषाः भिन्नभिन्ना व्यक्तयः । ते च अयुगपत् न एककालभाविनः अपितु क्रमभाविनः । प्रथमं दिग्विशेषावच्छिन्नाकाशसंयोगो जायते । तेन तज्जनकं कर्म नश्यति । अनन्तरं अन्यः संयोगोऽपरदिग्विशेषावच्छिन्नाकाशेन । तेन तज्जनकं कर्म नश्यति । एवमुत्तरोत्तरसंयोगनाश्यत्वात् तत्तज्जनकस्य कर्मणः न एकं कर्म आन्तमनुवर्तते । अपितु यावन्तः संयोगाः तज्जनकानि तन्नाश्यानि च कर्माणि तावन्ति भवन्तीत्यर्थः ।

**२००. नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्कारादुत्तरं तथोत्तरमुत्तरं च ।। १७ ।।**

यदि प्रथममुत्पन्नं कर्म तज्जन्यसंयोगान्नश्यति तर्हि अनन्तरं कुतो जायत इत्यत्राह । नोदनादाद्यमिषोः कर्मेति ज्ञातमेतत् । तेन आद्येन कर्मणा उत्तरदेशसंयोगवत् वेगाख्यः संस्कारोऽपि कार्यते उत्पाद्यते । तस्माच्च संस्कारात् उत्तरं द्वितीयं कर्म जायते । तथा तेनैव प्रकारेण उत्तरमुत्तरं च सर्वं कर्म जायत इति कर्मानेकत्वमुपपन्नम् ।

# अथ पञ्चमाध्याये

## प्रथममाह्निकम्

भोक्ता आत्मा निरूपितः। द्रव्यानन्तरं निर्दिष्टेषु गुणेषु भोग्यतया प्रधानभूता रूपादयो विशेषगुणा अपि बहुधा निरूपिताः। अथ गुणान्तरनिरूपणं पश्चात् करिष्यन् भोक्तुर्भोगहेतुभूतं कर्म निरूपयितुमारभते। तत्र प्रथमं शरीरगतं कर्म कारणतो निरूपयति—

**१८४. आत्मसंयोगप्रयत्नाभ्यां हस्ते कर्म ॥ १ ॥**

हस्ते यत् कर्म जायते तस्य द्वे कारणे। एकं आत्मसंयोगः। य आत्मा तच्छरीरमधितिष्ठति तेन संयोगः हस्तस्य। तस्य आत्मनः हस्तेन संयोग इति वा। शरीरे जायमानस्य सर्वस्य कर्मणः इदं साधारणं कारणम्। मृतशरीरे कर्मणोऽभावात्। हस्ते यत् कर्म तत्र तदनुकूलः प्रयत्नः असाधारणकारणम्। प्रयत्नः आत्मन एव गुण इति तस्यात्मवृत्तित्वं स्वयं लभ्यते। मुसलं पश्यति। तत्कर्मकादानक्रिया हस्ते जायतामिति इच्छति। तद्विषयः प्रयत्नो जायते। ततो हस्ते क्रिया भवति। ईदृशो यत्नो यदि न जायते तर्हि इयं क्रिया नैव हस्ते जायेतेति द्वितीयमिदं कारणम्।

**१८५. तथा हस्तसंयोगाच्च मुसले कर्म ॥२॥**

तथेति हस्तस्य विशेषणम्। तादृशेत्यर्थः। आत्मसंयोगप्रयत्नाभ्यां कर्मवत्त्वार्हदशापन्नो यो हस्तः तत्संयोगादित्यर्थः। हस्तेन मुसलं गृहीत्वा उत्क्षिपति अवक्षिपति च। उत्क्षेपणावक्षेपणात्मिके क्रिये हस्ते, उद्गमनाधोगमनात्मिके क्रिये मुसले च जायेते। तत्र हस्तक्रिययोः कारणमुक्तम्। मुसलक्रिययोः कारणं विशिष्टहस्तसंयोगः। आत्मसंयोगप्रयत्नयोः हस्तसंयोगद्वारैव मुसलक्रियाहेतुत्वात् तावत्र अन्यथासिद्धौ। हस्ते कर्म मुसले च कर्मेति चकारयोजना।

**१८६. अभिघातजे मुसलादौ कर्मणि व्यतिरेकादकारणं हस्तसंयोगः ॥३॥**

क्रियारहिता गुणाः यथा कारणं भवन्ति तथैव दिगपि क्रियारहितैव परत्वापरत्वे प्रति कारणं भवतीति ज्ञेयमिति भावः ।

२२८. **कारणेन कालः** ॥ २७ ॥

व्याख्यात इति विपरिणतमनुषज्यते । क्रियारहित एव कारणमिति ज्ञापित इति तदर्थः । कारणेन "नित्येष्वभावादनित्येषु भावात् कारणे कालाख्या" इति कालः कारणमिति वदता सूत्रेणेत्यर्थः ।

वसन्ते पुष्पाणि, ग्रीष्मे तापः, वर्षासु वृष्टिः इत्यबाधितप्रतीतिबलात् कालः कारणमित्युक्तम् । तत्र क्रियानिरपेक्षस्य स्वरूपसत एव हि कालस्य कारणत्वं विवक्षितम् । अतः निष्क्रिय एव कालः कारणमिति स्थितम् ।

दिक्कालयोः स्वातिरिक्ततत्तद्द्रव्यगतपरत्वापरत्वकारणं निष्क्रिययोः कथं भवतीति स्वरसतः शङ्का भवतीति कृत्वा निष्क्रिययोरेव तयोः कारणत्वं सम्भवतीत्युक्तम् । आकाशस्य "दिक्कालावकाशं च क्रियावद्वैधर्म्यान्निष्क्रियाणि" इति निष्क्रियत्वेनोक्तस्य द्रव्यान्तरगतक्रियाधीनसंयोगविभागशब्दकारणकशब्दसमवायित्वेनानुमीयमानस्य "निष्क्रियस्य तस्य कथं शब्दाश्रयत्वम्" इति शङ्का नैवोदेतीति नास्याः परिहारं करोति सूत्रकारः । इमं विशेषमभिप्रेत्यैव "दिक्कालाकाशानि" इति समासमकृत्वा "आकाशं च" इति पृथङ् निर्देश इति विभाव्यम् ।

इति

वैशेषिकसूत्रवृत्तौ सुगमायां

पञ्चमाध्याये द्वितीयमाह्निकम्

# अथ षष्ठाध्याये

## प्रथममाह्निकम्

लौकिकक्रियारूपं कर्म निरूपितम् । अथ वैदिकक्रियारूपं तन्निरूप्यते । तत्र वेदप्रामाण्यसिद्धये तत्कर्तुराप्तत्वं वक्ष्यन् प्रथमं तस्य कर्तृमत्त्वं साधयति—

**२२९. बुद्धिपूर्वा वाक्यकृतिर्वेदे ॥ १ ॥**

लौकिकस्य अस्मदादिप्रत्यक्षस्य एतन्मूलकस्यानुमानस्य च अगोचरो योऽर्थः तद्बोधकः ऋग्यजुःसामाथर्वभेदेन विभज्यमानः शब्दराशिर्वेदः । तत्र यानि वाक्यानि सन्ति तानि सर्वाणि केनचित् कैश्चिद्वा कर्तृभिः कृतानीति वक्तव्यम् । रामायणमहाभारतादिवाक्यवत् । न हि वक्तारं पुरुषं विना लोके किञ्चन वाक्यं दृश्यते । अशरीरिणी वागस्तीति चेत् सत्यम् । न तु अवक्तृका वागस्ति । तत्रापि अदृश्यस्य वक्तुरवश्यम्भावात् । वाक्यानां कर्ता च सः, यः तदर्थबोधवान् । आहुर्हि अर्थं बुद्ध्वा शब्दरचनेति । अनेन वाक्यरचनां प्रति वक्तुस्तद्वाक्यार्थबोधः कारणमित्युक्तं भवति । अनया व्याप्त्या वेदवाक्यरचनाऽपि तदर्थबोधपूर्विकेति सिद्धयति । इदमुच्यते–'बुद्धिपूर्वा वाक्यकृतिर्वेदे' इति । बुद्धिर्बोध, स च वाक्यार्थविषय इत्यर्थाल्लभ्यते । न च बुद्धिर्बोद्धारं विनेति कर्तृसिद्धिः ।

एवमनुमानात् सिद्धस्य वेदकर्तुराप्तत्वं साधयति—

**२३०. ब्राह्मणे संज्ञाकर्म सिद्धिलिङ्गम् ॥ २ ॥**

मन्त्रो ब्राह्मणमिति वेदस्य द्वौ भागौ । तत्र ब्राह्मणभागे अलौकिकानां कर्मणां अन्येषां च स्वर्गनरकादिरूपाणां अर्थानां संज्ञाः दृश्यन्ते । संज्ञाश्च "प्रत्यक्षप्रवृत्तत्वात् संज्ञाकर्मणः" इति पूर्वोक्तरीत्या तदर्थसाक्षात्कारसमर्थैरेव कृता भवितुमर्हन्ति । अतः ब्राह्मणे दृश्यमाना याः अलौकिकानामर्थानां संज्ञाः तासां कर्म क्रिया, तत्कर्तृणां, तत्करणपूर्वकं ता उपयुज्य वेदवाक्यानि रचितवतां पुरुषाणां, सिद्धौ अतीन्द्रियार्थसाक्षात्कारसामर्थ्ये, लिङ्गं प्रमाणं भवति । तथा च अनेन लिङ्गेन अवगतशक्तिविशेषाणां वेदकर्तृणां वेदवाक्यरचनहेतुभूतं ज्ञानं प्रमात्मकमेवेति तेषां यथार्थदर्शित्वरूपं आप्तत्वं निश्चीयते । अतस्तत्कृतस्य वेदस्य प्रामाण्यं निर्विघातमिति भावः ।

एवं वेदप्रामाण्यं प्रसाध्य अथाद्य तत्प्रमेयं धर्ममाह—

**२३१. बुद्धिपूर्वो ददातिः ॥ ३ ॥**

दानार्थकधातुवाची ददातिशब्दः अत्र दद्यादिति दानविधिमाह। सः बुद्धिपूर्वः, "दाने कृते इदं फलं भवति। अतः एतत्फलकामैः दानं कर्तव्यम्। तच्च एवं कर्तव्यम्।" इति बुद्धिपूर्वकः। अनया बुद्ध्या वेदकर्ता दानविधिं वेदे निबद्धवानित्यर्थः। एवं विहितं दानं "अभ्युदयसाधनतया" वेदेन बोधितत्वात् "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः' इत्युक्तलक्षणाक्रान्तं भवतीति धर्मपदवाच्यं भवति।

अध्ययनं इज्या दानमिति धर्मस्त्रिविधः। वेदबोधितः। तत्र अध्ययनं वेदग्रहणधारणार्थतया दृष्टफलमिति स्पष्टम्। कालान्तरानुभाव्यस्वर्गादिफला इज्या अदृष्टफलेत्यपि स्पष्टम्। अतो धर्मानुष्ठानप्रथमसाधनशरीरधारणोपयुक्तदानप्रतिग्रहविषये किञ्चित् वक्तुकामः प्रथमं दानस्य धर्मत्वं अत्राब्रवीदिति ज्ञेयम्।

२३२. **तथा प्रतिग्रहः ॥ ४ ॥**

परेण दीयमानस्य स्वीकरणं प्रतिग्रहः, सोऽपि तथा बुद्धिपूर्वः। प्रतिग्रहः कदा कस्मात् कथं कर्तव्य इति बोधपूर्वकं निबद्ध इति भावः। यथाविधि क्रियमाणः प्रतिग्रहो धर्मो भवति। अन्यथा नेत्युक्तं भवति। दानेऽप्येतदनुसन्धेयम्।

२३३. **आत्मान्तरगुणानामात्मान्तरगुणेष्वहेतुत्वात् ॥ ५ ॥**

प्रतिग्रहं विना दानस्यानिष्पत्त्या दानान्तर्भूत एव प्रतिग्रहः। तत् कथमस्य दानापेक्षया पृथक् धर्मत्वमिति शङ्कापरिहारार्थमिदं सूत्रम्। सत्यं दानं केनचित् क्रियमाणं परेण क्रियमाणं प्रतिग्रहमपेक्षते। न तु तावता दानांशः प्रतिग्रहः। दानं हि नाम वस्तुनि स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वापादनम्। अस्मा इदं न मम, इति ज्ञानविशेषः। अयं दातृनिष्ठः। तन्निष्ठफलजनकः। दात्रा स्वस्वत्वनिवर्तनपूर्वकं आपाद्यमानस्य परस्वत्वस्य "इदं वस्तु मदीयं भवतु" इति परेण क्रियमाणा अनुमतिः प्रतिग्रहः। अयमपि ज्ञानविशेषात्मा। परनिष्ठः तन्निष्ठफलहेतुः। एवं दानभिन्नस्य दातृभिन्ननिष्ठगुणरूपस्य प्रतिग्रहस्य दातृनिष्ठफलविशेषात्मकगुणहेतुत्वाभावात् प्रतिग्रहीतृनिष्ठफलजनकत्वाच्च दानात् पृथग्धर्मत्वमवश्यं वाच्यमिति भावः।

सूत्रे प्रथमः आत्मान्तरशब्दः प्रतिग्रहीतृपरः। द्वितीयः दातृपरः। आत्मान्तरगतं ज्ञानं इच्छा अदृष्टं वा आत्मान्तरगताया इच्छायाः प्रवृत्तेः सुखादेर्वा हेतुर्न भवति। तथा प्रकृतेऽपीति दृष्टान्तज्ञापनाय गुणानां गुणेष्विति बहुवचनम्।

२३४. **तद् दुष्टभोजने न विद्यते ॥ ६ ॥**

अभ्युदयसाधनतया धर्मभूतस्य दानस्य इतरस्माद् विविच्य बोधाय इतरद् दर्शयति अनेन सूत्रेण। तद् उक्तविधबुद्धिपूर्वकत्वं, दुष्टस्य पुरुषस्य भोजने, णिजन्तात् ल्युटि इदं रूपम्। आशने इत्यर्थः। दुष्टाय अन्नदाने इत्युक्तं भवति। न विद्यते नास्ति। दुष्टाय क्रियमाणं अन्नदानं न धर्मः। अदुष्टसम्प्रदानकस्यैव दानस्य उक्तविधवेद-

कर्तृबुद्धिपूर्वकत्वेन धर्मत्वादिति भावः। अत्र भोजनमिति द्रव्यान्तरदानानामप्युपलक्षणम्।

को दुष्ट इत्यत्राह—

२३५. दुष्टं हिंसायाम् ॥ ७ ॥

हिंसायां सत्यां तस्या हिंसायाः कर्तारं पुरुषं दुष्टं विजानीयात्। तस्य भोजनं न धर्मः। नाभ्युदयाय।

ननु हिंसारहितः पुरुषो लोके दुर्लभः। अन्ततः मशकपिपीलिकादिहिंसाया अवर्जनीयत्वात्। अत्राह—

२३६. तस्य समभिव्याहारतो दोषः ॥ ८ ॥

हिंसाकारितया दुष्ट इत्यत्र दुष्ट इत्यनेन विवक्षितो यः पुरुषः तस्य समभिव्याहारतः संसर्गात् दोषः पातित्यं भवति। पातकिसंसर्गो हि पातित्यहेतुः। अतः यस्य संसर्गात् इतरस्य पातकं भवति तादृशः ब्रह्महत्यादिकरणात् पातकवान् कापुरुषः दुष्ट इतीहाभिप्रेतः। तस्य भोजनं नाभ्युदयहेतुः। न धर्म इति भावः।

२३७. तददुष्टे न विद्यते ॥ ९ ॥

तत् "तद् दुष्टभोजने न विद्यते" इत्युक्तं अबुद्धिपूर्वकत्वं तन्मूलकं अभ्युदयाहेतुत्वं वा अदुष्टे उक्तविधदुष्टभिन्ने भोक्तरि सति न विद्यते। तस्य भोजनस्य बुद्धिपूर्वकत्वं भवतीति भावः। "तददुष्टे विद्यते" इति नञ्रहितः पाठः किमस्तीति युक्तमन्वेषणम्। अदुष्टेन भोक्त्रा तद्विद्यत इति योजनं यद्यपि सङ्गतं तथापि न स्वारसिकम्। दोषाभावमात्रेणापि पुरुषो दानयोग्यो भवतीति सूत्रकार इह विवक्षति।

यद्यप्येवं तथापि गुणा अपि यत्र सन्ति स पात्रीकर्तव्य इत्याह—

२३८. पुनर्विशिष्टे प्रवृत्तिः ॥ १० ॥

पुनः किन्तु विशिष्टे स्वापेक्षयाऽपि अभिजनविद्यावृत्तादिभिः अधिके, उत्कृष्टे, पुरुषे प्रवृत्तिः दानविषयो यत्नः। कर्तव्येति शेषः।

२३९. समे हीने वा प्रवृत्तिः ॥ ११ ॥

विशिष्टस्यालाभे, आभिजात्यादिभिः स्वस्य समे सदृशे, हीने अपकृष्टे वा प्रवृत्तिः कार्या। न तु अदुष्टलाभमात्रेण तृप्तिः कार्या। यथा यथा प्रतिग्रहीता गुणवान् तथा तथा दानस्य वीर्यवत्तरत्वादिति भावः। अत्र प्रवृत्तिरिति अनुषङ्गादेव लाभात् पुनः पाठः एतद्ज्ञापनार्थः।

२४०. एतेन हीनसमविशिष्टधार्मिकेभ्यः परस्वादानं व्याख्यातम् ॥ १२ ॥

यथा दाने सम्प्रदानगुणेषु विवेकः कर्तव्यः तथा प्रतिग्रहे अपादानगुणेष्वपि विवेकः कार्य इत्याह । एतेन गुणवद्विषयक्रमनिरूपणेन । परस्वानां परकीयद्रव्याणां परैर्दीयमानानां आदानं ग्रहणं प्रतिग्रहः । व्याख्यातं ज्ञापितं भवति । कथम् । हीनसम-विशिष्टधार्मिकेभ्य इति । वृत्तिकार्श्ये प्रतिग्रहो धर्म्यः । तत्र पतितात् प्रतिग्रहो दोष-हेतुः । अदुष्टात् प्रतिग्रहे न कश्चन विशेषः । यदा तु धार्मिकेभ्यः गुणवद्भ्यः प्रतिग्रहः क्रियते तदा हीनधार्मिकात् प्रतिग्रहः प्रथमः कल्पः । मन्दधार्मिके हि तस्मिन् तस्य द्रव्यस्य उपयोगः न तथा प्रयोजनवान् यथा ततो विशिष्टे प्रतिग्रहीतरि । असति हीनधार्मिके समधार्मिकात् प्रतिग्रहोऽनुकल्पः । अस्मिन्नप्यसति विशिष्टधार्मिकात् प्रतिग्रहः तस्याप्यनुकल्प इति ।

प्रतिग्रहे स्पर्धालुप्रसङ्गे कर्तव्यमाह—

**२४१. तथा विरुद्धानां त्यागः ॥ १३ ॥**

विरुद्धानां प्रतिग्रहे प्रतिबन्धमाचरतां दीयमानं द्रव्यं स्वयं लब्धुमिच्छतां, जनानां त्यागः निरासः तथा परस्वादानवत् व्याख्यातः । स्पर्धाप्रसङ्गे त्यागः कर्तव्यः । सोऽपि विवेकेन कर्तव्य इति भावः ।

विवेकं स्वयमेव दर्शयति—

**२४२. हीने परे त्यागः ॥ १४ ॥**

परे विरोधिनि हीने स्वस्मादवरे सति तस्य त्यागः निवारणं, कर्तव्यम् । स्वस्मिन् हि दीयमानस्य वस्तुनः उपयोगः प्रयोजनवत्तरो भवेत् ॥

**२४३. समे आत्मत्यागः परत्यागो वा ॥ १५ ॥**

विरोधिनि समे सति आत्मनो वा प्रतिग्रहात् निवर्तनं परस्य वेति विकल्पः । उभयत्र विशेषाभावात् ।

**२४४. विशिष्टे आत्मत्याग इति ॥ १६ ॥**

विरोधिनि विशिष्टे सति आत्मनो निवर्तनम् । स विरोधी प्रतिग्रहीता कर्तव्यः । दीयमानं हि वस्तु तेनोपयुज्यमानं प्रयोजनवत्तरं भवेत् । इतिशब्दः दान प्रतिग्रहप्रकरणावसानबोधकः ॥

इति वैशेषिकसूत्रवृत्तौ सुगमायां
षष्ठाऽध्याये प्रथममाह्निकम्

# अथ षष्ठाध्याये

## द्वितीयमाह्निकम् ॥

वैदिककर्मसामान्यं प्रति वक्तव्यं अस्मिन् आह्निके उच्यते ।

**२४५. दृष्टादृष्टप्रयोजनानां दृष्टाभावे प्रयोजनमभ्युदयाय ॥ १॥**

वैदिकानि कर्माणि द्विविधानि । दृष्टप्रयोजनानि अदृष्टप्रयोजनानि च । दृष्टं प्रत्यक्षावगतं प्रयोजनं नास्ति येषां तान्यदृष्टप्रयोजनानि । अध्ययनं अक्षरराशि-ग्रहणार्थतया दृष्टप्रयोजनम् । नित्याग्निहोत्रादिकं अदृष्टप्रयोजनकम् । अदृष्ट-प्रयोजनानां कर्मणां वेदोपदिष्टानां तत एव हेतोः निष्प्रयोजनत्वं न मन्तव्यम् । प्रमाणभूतवेदोपदिष्टत्वात् तेषां दृष्टप्रयोजनविरहेऽपि अदृष्टं किञ्चित् प्रयोजनम-स्तीति प्रत्येतव्यम् । किं तत् अदृष्टं प्रयोजनमिति चेत् यत् तानि अभ्युदयाय भवन्ति तत्प्रयोजनम् । अभ्युदयः कालान्तरे इह वा परत्र वा अनुभाव्यं सुखम् । दृष्टादृष्ट-प्रयोजनानां दृष्टाभावे प्रयोजनमुच्यते । तानि अभ्युदयाय भवन्तीति सूत्रयोजना । प्रयोजनं प्रयोगः । अनुष्ठानमिति वा । ननु अदृष्टप्रयोजनानामित्येतावद्वक्तव्यम् । किं दृष्टादृष्टेत्यधिकेन । उच्यते । दृष्टप्रयोजनेष्वपि पुनः प्रयोजनान्तरापेक्षाऽस्ति । यथा अध्ययनेन किमर्थमक्षरराशिग्रहणम् । पुस्तकपाठेनापि तत्सम्भवात्, इति । तत्राध्ययनेन तद्ग्रहणे अभ्युदयो भवतीति वक्तव्यम् । तदर्थं दृष्टेति ।

अदृष्टप्रयोजनानि कानिचित् कर्माणि कांश्चन नियमांश्च दर्शयति—

**२४६. अभिषेचनोपवासब्रह्मचर्यगुरुकुलवासवानप्रस्थयज्ञदानप्रोक्षण-दिङ्नक्षत्रमन्त्रकालनियमाश्चादृष्टाय ॥ २ ॥**

अभिषेचनं स्नानम् । अस्य मलापकर्षणार्थत्वेऽपि शास्त्रोक्तरीत्या करणं अदृष्टाय प्रयोजनाय । उपवासः शास्त्रचोदितं अनशनम् । ब्रह्मचर्यं उपनीतस्य तदर्थविहितव्रत-परिपालनम् । गुरुकुलवासः तत्र वसता क्रियमाणा गुरुशुश्रूषा । नैष्ठिकब्रह्मचर्यं वा । वानप्रस्थं कुटुम्बभरं पुत्रेष्वर्पयित्वा वनमागत्य वसतां तदर्हधर्मपरिपालनम् । यज्ञाः दर्शपूर्णमासज्योतिष्टोमादयः देवेभ्यो द्रव्यत्यागरूपाः । दानं मनुष्येभ्यो द्रव्यत्यागः । प्रोक्षणं जलबिन्दुभिः संस्कारः । एतानि अदृष्टप्रयोजनानि ।

शरीरसंस्कारः स्नानं प्रथममुक्तम् । ततो भोजनप्रसक्त्या तन्निवृत्तिरूप उपवासः । अथ आश्रमेषु प्रथमं ब्रह्मचर्यं तत्सम्बन्धी गुरुकुलवासश्च । गृहादन्यत्र वास-साम्यात् ततः परं वानप्रस्थम् । अथ गृहस्थकर्माणि यज्ञादीनीति निर्देशक्रमः । यज्ञदाने

प्रधानकर्मणी । प्रोक्षणमङ्गम् । अथ नियमाः दिङ्नियमः । प्राङ्मुख उदङ्मुखो वा उपविश्य आचामेदित्यादिः । नक्षत्रनियमः अस्मिन्नक्षत्रे इदं कर्म कर्तव्यमिति । यथा पुनर्वस्वोरादधीतेति । मन्त्रनियमः विहितमन्त्रेण स्मृत्वैव तत्तत्कर्म कर्तव्यमिति । कालनियमः सायं जुहोति, प्रातर्जुहोति, पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायां अमावास्यया यजेतेति । अभिषेचनोपवासयोः सन्न्यासिसाधारणत्वात्, सन्न्यासिनां गृहस्थादीनां यज्ञादिवत् विशिष्य वक्तव्यकर्मविशेषाभावात् सन्न्यासाश्रमस्य मोक्ष प्रधानतया अदृष्टार्थत्वस्य स्पष्टत्वाच्च तदीयं कर्म किमप्यत्र नोक्तमिति ज्ञेयम् ।

एवं वैदिकं कर्म दृष्टादृष्टप्रयोजनभेदेन द्वेधा विभज्य दर्शितम् । अथ उपधानुपधाभेदेन विभजति, उपधारूपं परित्याज्यमिति ज्ञापनाय—

**२४७. चातुराश्रम्यमुपधा अनुपधाश्च ॥ ३ ॥**

चतुर्षु ब्रह्मचर्यादिषु आश्रमेषु स्थितानां कर्तव्यतया विहितानि कर्माणि उपधारूपाणि अनुपधारूपाणि च भवन्ति ।

उपधानुपधाशब्दौ स्वयमेव व्याचष्टे—

**२४८. भावदोष उपधाऽदोषोऽनुपधा ॥ ४ ॥**

उपधाशब्देन भावदोषः प्रवृत्तिनिमित्ततया उच्यते । तदभावः अनुपधाशब्देन । तथा च पूर्वसूत्रे चतुराश्रमसम्बन्धीनि कर्माणि भावदुष्टानि भावदोषरहितानि, इति द्विविधानीति विवक्षितमिति भावः । भावः आशयः, अभिसन्धिः । अश्रद्धया सत्कारलाभपूजादिहेतोः क्रियमाणानि भावदुष्टानि । श्रद्धया भगवत्प्रीत्यर्थं लोकक्षेमार्थं च क्रियमाणानि भावदोषैरहितानि । पूर्वाणि अभ्युदयाय न भवन्ति । तस्मात् तानि न कर्तव्यानीति । यद्यपि अन्तिमाश्रमिणां यज्ञदानादिरूपं कर्म नास्ति तथापि भिक्षाचरणजपादिरूपं किञ्चित् अस्तीति चातुराश्रम्योक्तिः ॥

**२४९. यदिष्टरूपरसगन्धस्पर्शं प्रोक्षितमभ्युक्षितं च तच्छुचि ॥ ५ ॥**

इष्टाः प्रियाः अनुभाव्याः रूपादयः यस्य तद् वस्तु इष्टरूपरसगन्धस्पर्शम् । यद्वस्तु ईदृशं प्रोक्षितं अभ्युक्षितं च तत् शुचि शुद्धम् उपयोगार्हमित्यर्थः । इष्टरूपत्वादिः दृष्टा शुद्धिः । प्रोक्षणाभ्युक्षणजन्या अदृष्टा । समन्त्रकं प्रोक्षणम् । अमन्त्रकं तदेव अभ्युक्षणमिति वदन्ति ।

भावदोषाभावः शुचिभोजनात् । अशुचिभोजनात्तु भावो दुष्यतीति ज्ञापनाय प्रथमं शुचिलक्षणमस्मिन् सूत्रे ब्रवीतीति ज्ञेयम् ।

अथ अशुचिपदार्थमाह—

**२५०. अशुचीति शुचिप्रतिषेधः ॥ ६ ॥**

न शुचि अशुचि । अशुचीत्यनेन यन्न शुचि भवति तदुच्यत इत्यर्थः । यदनिष्टरूपादि अप्रोक्षितमनभ्युक्षितं च तत् अशुचीत्युच्यत इति यावत् ॥

अन्योऽप्यर्थ अस्य शब्दस्यास्तीत्याह—

२५१. **अर्थान्तरं च** ॥ ७ ॥

न केवलमुक्तरीत्या यत् शुचि तद्भिन्नं अशुचिशब्दाभिधेयं, अपि तु यत् जात्या आश्रयेण निमित्तेन वा दुष्टं तदपि तदभिधेयमित्यर्थः। कलञ्जगृञ्जनादिकं जातिदुष्टम्। अभिशस्तपतितादिद्रव्यमाश्रयदुष्टम्। उच्छिष्टकेशाद्युपहतं निमित्त-दुष्टम्। भावदोषानुत्पत्तिकामैः इदं सर्वं न भोक्तव्यम्। शुचिभोजनमेव कर्तव्यम्, इति भावः॥

अथ क्वचित् शुचि भोजनमपि न फलाय कल्पत इत्याशङ्क्य परिहरति—

२५२. **अयतस्य शुचिभोजनादभ्युदयो न विद्यते। विद्यते वाऽर्थान्तर-त्वात् यमस्य** ॥ ८ ॥

अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः। यस्य एते सन्ति सः यतः। यस्य न सन्ति सः अयतः। अस्य अयतस्य यमरहितस्येत्यर्थः। शुचिभोजनात् शुद्धाहारसे-वनात्, अभ्युदयः भावदोषाभावरूपः, विहितकर्मानुष्ठानयोग्यतारूपः, फलविशेषः न विद्यते नास्ति। नोत्पद्यते। कुतः। नियमाभावात्। एते हि यमाः विहितकर्मानुष्ठान-साद्गुण्यापादकाः अत एव तदङ्गभूता नियमा भवन्ति। शुचिना हि शास्त्रचोदितं कर्म कर्तव्यम्। न च हिंसादिकर्तुः यमरहितस्य शुचित्वमस्ति। न चाशुचिना क्रियमाणं भोजनं भुज्यमानस्य शुचित्वेऽपि फलाय कल्पेत। अतोऽभ्युदयो न विद्यत इति पूर्वः पक्षः। अत्र सिद्धान्तमाह-विद्यते वेत्यादिना। वकारः पक्षान्तरोपस्थापनद्वारा पूर्व-पक्षनिरसनबोधकः। विद्यत एवाभ्युदयः अयतस्यापि शुचिभोजनात्। कुतः। अर्थान्तरत्वाद् यमस्य। यमः भोजनाद्यङ्गभूतनियमेभ्योऽर्थान्तरम्। अहिंसादीनां यमानां योगाङ्गत्वं पुरुषार्थत्वं वा। न तु भोजनादिकर्मार्थत्वम्। तथा विधानाभावात्। स्नातेन भोक्तव्यम्, पञ्च महायज्ञान् कृत्वा भोक्तव्यम्, भगवते निवेदितं भोक्तव्यम्, इत्येवमादीनामेव नियमानां तदङ्गत्वात्॥

उक्तमेव द्रढयन्नाह—

२५३. **असति चाभावात्** ॥ ९ ॥

शुचिभोजनानङ्गभूते यमेऽसत्यपि अङ्गभूतनियमाभावस्याभावात्, अङ्गभूत-नियमसत्त्वादित्यर्थः। विद्यत इत्यनुषक्तेन अन्वयः। यद्वा अङ्गभूतनियमे असत्येव शुचिभोजनजन्यस्य अभ्युदयस्य अभावात्। न तु अनङ्गभूते यमे असतीत्यर्थः। असति च भावादिति पाठः किमस्तीत्यन्वेष्टव्यम्॥

अथ धर्माधर्मरूपस्य कर्मणः संसारबन्धहेतुत्वं वक्ष्यन् कर्मणि पुरुषप्रवृत्तेर्हेतुं वदति—

२५४. **सुखाद् रागः ॥ १० ॥**

सुखं स्वयमभिलाषविषयः । येन सुखं जायते तस्मिन् सुखसाधने कर्मणि पुरुषस्य रागः इच्छा स्वयमभिलषितात् फलभूतात् सुखात् जायते ॥

२५५. **तन्मयत्वाच्च ॥ ११ ॥**

तन्मयत्वं रागप्रचुरत्वम् । तस्माच्च रागो भवति । न परमिह जन्मनि क्रियाविशेषजन्यं सुखं ज्ञात्वा तस्यां क्रियायां पुरुषो रज्यति । किन्तु प्राक्तनानन्तजन्मपरम्परानुभवजनितसंस्कारद्वारा रागप्रचुरत्वाच्च तस्मिन् तस्मिन् कर्मणि रागो जायत इत्यर्थः । अत एव हि जातमात्रस्य शिशोः स्तन्यपाने प्रवृत्तिः । आहुश्च "वीत रागजन्मादर्शनात्" इति ॥

२५६. **अदृष्टाच्च ॥ १२ ॥**

पुण्यापुण्यरूपात् अदृष्टाच्च कर्मणि रागो जायते । विचित्रफलकारणं हि अदृष्टम । तत् कदाचित् अनभ्यस्तपूर्वेऽपि कर्मणि रागं जनयेत् ॥

२५७. **जातिविशेषाच्च ॥ १३ ॥**

जातिर्जन्म । तद्विशेषाच्च केषाञ्चित् केषुचित् कर्मसु रागो जायते । यथा केषाञ्चित् मधुरभक्षणे । केषाञ्चिल्लवणभक्षणे । यथा च केषाञ्चित् परिवादे । अन्येषां मिथ्यास्तुतौ, इतरेषां मौने, इति । इत्थं चतुर्भिः सूत्रैः रागकारणान्युक्तानि । तत्र सुखादित्यस्य स्थाने दुःखादिति निवेश्य द्वेषकारणप्रतिपादकतयाऽपि इमानि सूत्राणि योजनीयानि ॥

एवं हेतुमुक्त्वा तद्धेतुका पुरुषस्य कर्मसु प्रवृत्तिरित्याह—

२५८. **इच्छाद्वेषपूर्विका धर्माधर्मयोः प्रवृत्तिः ॥ १४ ॥**

रागशब्दार्थविशदीकरणायात्र इच्छाशब्देन तदुक्तिः । इच्छाद्वेषौ पूर्वौ कारणे यस्याः सा । धर्मे पुरुषस्य प्रवृत्तिः अधर्मे च । प्रवृत्तिः आचरणम् । स्वर्गपश्वादिकामस्य तत्साधने यज्ञकर्मणि रागात् प्रवृत्तिः । शत्रुद्वेषात् तद्वधकर्मणि रागः । तेन च तत्र प्रवृत्तिः । पापे द्वेषात् नित्यकर्मणि रागः । सन्ध्यावन्दनादिनित्यकर्मपरित्यागे हि पापं भवेत् । तेन तदनुष्ठानम् । तात्कालिकसुखाभासे रागात् सुरापानादौ प्रवृत्तिः । तात्कालिकदुःखे द्वेषात् अवश्यकर्तव्यकर्मवर्जनम् । एवमिच्छाद्वेषाभ्यां धर्मे अधर्मे च पुरुषस्य प्रवृत्तिः ॥

एवं धर्माधर्मरूपं कर्म इच्छाद्वेषहेतुकमित्युक्तम् । अथाद्य एवंरूपकर्महेतुकं जननमरणप्रबन्धरूपः संसार इत्याह—

२५९. **तत् संयोगो विभागः ॥ १५ ॥**

तदित्यव्ययम् पञ्चम्यन्तार्थकम् । तस्मात् धर्माधर्मात्मककर्मरूपात् हेतोः संयोगः जीवात्मनः देहसम्बन्धः । जन्मतत्प्रयुक्तसुखदुःखानुभवश्चेति भावः । विभागः देह-वियोगः । मरणमिति यावत् । पुनः संयोगः विभागः । पुनरपि संयोगः विभाग इति परम्पराऽनुवर्ततेति ज्ञापनाय चकाराप्रयोगः ।

एवं कर्मकृतः संसार इत्युक्ते तस्मान्मुक्तिः कथमिति जिज्ञासा स्वरसतो जायते । तत्र पूर्वमेवेदमुक्तमित्याह—

**२६०. आत्मकर्मसु मोक्षो व्याख्यातः ।। १६ ।।**

आत्मकर्मसु "कायकर्मणा आत्मकर्म व्याख्यातम्" इत्यादिषु पञ्चमाध्याय-द्वितीयाह्निकसूत्रेषु त्रिषु मोक्षः व्याख्यातः कथं भवतीति निरूपितः । अत इह पुनर्नोच्यत इति भावः ।।

— :०: —

इति वैशेषिकसूत्रवृत्तौ सुगमायां

षष्ठाध्याये द्वितीयमाह्निकम् ।।

पूर्वतोऽनुवर्तमाना—

# सुगमाभिधा
# वैशेषिकसूत्रवृत्तिः

डा० टी० ताताचार्यकृता

———

## अथ सप्तमेऽध्याये
## प्रथममाह्निकम्

**२६१. उक्ता गुणाः ॥१॥**

द्रव्यगुणकर्मसु गुणेभ्यः परं निर्दिष्टस्यापि कर्मणः हेतुविशेषेण तेभ्यः पूर्वमेव निरूपणं कृतम्। अथात्र गुणा निरूप्यन्ते। तत्र के गुणा इत्याकांक्षायां उक्ता एव ते पूर्वं "रूपरसगन्धस्पर्शाः" १-१-६ इत्यादिनेत्येतदत्रोच्यते।

**२६२. पृथिव्यादिरूपरसगन्धस्पर्शा द्रव्यानित्यत्वादनित्याश्च ॥ २ ॥**

प्रथमं आद्यानां चतुर्णां गुणानां नित्यत्वानित्यत्वे उच्येते। ते अनित्याः। कस्मात्। द्रव्यानित्यत्वात्। आश्रयद्रव्यनाशादेते नश्यन्ति। अतोऽनित्या इत्यर्थः।

अनित्याश्चेति चकारेण समुच्चितं नित्यत्वं सहेतुकमाह—

**२६३. एतेन नित्येषु नित्यत्वमुक्तम् ॥ ३ ॥**

एतेन द्रव्यानित्यत्वहेतुकानित्यत्वोक्त्या नित्येषु एषु द्रव्येषु विद्यमानानां रूपादीनां गुणानां नित्यत्वमुक्तमिति भावः। आश्रयद्रव्यानित्यत्वे हि एषामनित्यत्वं भवेत्। तदभावात् नित्येषु एषु द्रव्येषु विद्यमाना एते गुणा नित्या एव भवन्ति, न त्वनित्या इति। तत्र विशेषमाह—

**२६४. अप्सु तेजसि वायौ च नित्याः द्रव्यनित्यत्वात् ॥ ४ ॥**

द्रव्यनित्यत्वाद् यन्नित्यत्वमुक्तं तत् अप्तेजोवाय्वात्मकभूतत्रयसम्बन्धिनित्यद्रव्येषु-परमाणुषु-विद्यमानानां रूपादीनामेव। न तु पृथिवीपरमाणुषु नित्येषु स्थितानाम्। तेषामनित्यत्वं वक्ष्यते ॥

पृथिव्यादिचतुष्टयानित्यद्रव्यगतरूपादीनां अनित्यत्वं पूर्वोक्तं स्मारयति—

**२६५. अनित्येष्वनित्या द्रव्यानित्यत्वात् ॥ ५ ॥**

पूर्वसूत्रोक्तं द्रव्यनित्यत्वहेतुकं रूपादिनित्यत्वं अबादिषु त्रिष्वेव। न तु पृथिव्याम्। द्रव्यानित्यत्वहेतुकमनित्यत्वं तु चतस्र्वपि द्रव्येष्विति भावः।

२६६. कारणगुणपूर्वकाः पृथिव्यां पाकजाः ॥ ६ ॥

एवं रूपादीनां चतुर्णां गुणानां नित्यानित्यभेदेन विभाग उक्तः । अनित्यद्रव्यगतानां तेषां अनित्यत्वेन साधर्म्यं, पृथिवीतरपरमाणुगतानां नित्यत्वेन साधर्म्यं चोक्तम् । एतेन अबादित्रितयपरमाणुगतानां पृथिवीपरमाणुगतानां च नित्यत्वानित्यत्वाभ्यां वैधर्म्यमपि ज्ञापितम् । अथानित्यद्रव्यगतानां एषामुभयेषां पाकजत्वापाकजत्वाभ्यां वैधर्म्यमाह—

२६७. एकद्रव्यत्वात् ॥ ७ ॥

रूपादीनां कार्यद्रव्यवर्तिनां कारणगुणपूर्वकत्वं पूर्वमुक्तम्—"कारणगुणपूर्वकः कार्यगुणो दृष्टः" इति । इदं कारणगुणपूर्वकत्वं पार्थिवादिषु चतुर्ष्वपि कार्यद्रव्येषु स्थितानां रूपादीनां समानम् । साधर्म्यमिति यावत् । किन्तु पार्थिवकार्यद्रव्यवर्तिन इमे पाकजाः । इतरे न पाकजा इति वैधर्म्यमप्यस्तीति भावः । पाकजत्वं परमाणुगुणद्वारा बोध्यम् ॥

ननु अनित्यानि द्रव्याणि सन्ति । तत्रत्या गुणाः रूपादयः कारणगुणपूर्वका इति यदुच्यते तन्न युक्तम् । कार्यस्य अणुसङ्घातरूपत्वेन अनित्यद्रव्यान्तराभावात् । द्रव्यान्तरस्यैवाभावे तत्र गुणान्तराप्रसक्त्या तेषां कारणगुणपूर्वकत्वोक्तेरयोगात् इति चेदत्राह—

एकं द्रव्यं आश्रयभूतं यस्य तस्य भावः, तस्मात् । रूपं अन्यो वा विशेषगुणः एकैकस्मिन् परमाणौ वर्तते । न त्वनेकस्मिन् व्यासज्य । अत इमे एकद्रव्या इति निश्चितम् । घटो रूपवानित्यत्र एकमेव रूपं भासते । तस्य चाश्रयेण एकेन भाव्यम् । अतो न परमाणुसङ्घातमात्रात्मा घटः । अपि तु तैरारब्धं द्रव्यान्तरमेकम् । तदीयमेकरूपं च अवयवरूपेभ्योऽन्यत् । तच्च अवयवगुणकरणकमेवेति युक्तं कारणगुणपूर्वकत्वं अवयविरूपादीनामिति ॥

प्रथमनिर्दिष्टाः रूपादयश्चत्वारो गुणा निरूपिताः । अथ सङ्ख्यानिरूपणं प्राप्तम् । तथाऽपि सङ्ख्यायाः एकपृथक्त्वं द्विपृथक्त्वमित्यादिव्यवहारेषु पृथक्त्वविशेषणतया तत्सम्बद्धत्वेन प्रतीतेः तन्निरूपणात् पूर्वं तां निरूपयितुमिच्छन् सम्प्रति परिमाणनिरूपणं प्रक्रमते । तत्र प्रथमं तद्विषये पूर्वं यदुक्तं तत् स्मारयति—

२६८. अणोर्महतश्चोपलब्ध्यनुपलब्धी नित्ये व्याख्याते ॥ ८ ॥

उपलब्धिपदस्य अल्पाच्तरत्वात् पूर्वनिपातः । अणोरनुपलब्धिः प्रत्यक्षाभावः, महत उपलब्धिश्च नित्ये नित्यद्रव्यसाधके चतुर्थाध्याये प्रथमाह्निके 'महत्यनेकद्रव्यवत्त्वात्' इयादिना सूत्रद्वयेन प्रतिपादिते इत्यर्थः ॥

एवं अणुप्रमाणं महत्प्रमाणं चोपस्थाप्य तद्विषये यदत्र विवक्षितं तदाह—

**२६९. कारणबहुत्वात् कारणमहत्त्वात् प्रचयविशेषाच्च महत् ॥ ९ ॥**

कारणबहुत्वात् कार्यं महत् भवति। महत्परिमाणवद् भवतीत्यर्थः। त्रिभिर्द्व्यणुकैः आरब्धे त्र्यणुके महत्परिमाणं आरम्भकाणां द्व्यणुकानां त्रित्वरूपेण बहुत्वेन जायते। न तत्र कारणमहत्त्वं वा प्रचयविशेषो वा कारणम्। द्वाभ्यां तन्तुभ्यामारब्धे पटे महत्परिमाणं कारणगतमहत्परिमाणेनैव जायते। न तु कारणबहुत्वात् प्रचयविशेषाद्वा। त्रिप्रभृतिभिस्तन्तुभिरारब्धे पटे तु तज्जनने उभयोः कारणयोः सन्निपातः। कारणबहुत्वस्य तन्महत्त्वस्य च। अथवा कारणबहुत्वमन्यथासिद्धम्। तन्महत्त्वमेव कारणम्। पीडनादिना घनीभूतस्य तूलपिण्डस्य आरम्भकाणां अवयवानां यदा हस्ताभ्यां व्यासः क्रियते तदा तेषां प्रचयविशेषो भवति। शिथिलः संयोग इत्यर्थः। तदानीं तस्य पिण्डस्यावयविनः परिमाणं च महद् भवति। न तत्र कारणबहुत्वं वा महत्त्वं वा कारणम्। पूर्वमपि तयोः स्थितत्वात्। तदानीं तदुत्पादनाभावात्। यदा तु प्रचयवदवयवारब्धाभ्यां तूलपिण्डाभ्यां तादृशैस्तूलपिण्डैर्वा महत्तरपिण्डारम्भः तदा तत्रत्यस्य महत्त्वस्य अवयवमहत्त्वमेव कारणम्। न तु प्रचयः। अन्वयव्यतिरेकाभावात् ॥

**२७०. अतो विपरीतमणु ॥ १० ॥**

यत् उक्तैः कारणैर्न जन्यते तत्परिमाणं अणु। अतः उक्तकारणजन्यात् परिमाणात् विपरीतं उक्तकारणाजन्यत्वात् नियमेन तद्व्यधिकरणं परिमाणमण्विति सूत्रस्याक्षरार्थः। परमाणौ द्व्यणुके च उक्तकारणाजन्यत्वादणुपरिमाणम्। अन्यत्र सर्वत्र महत् ॥

शङ्काविशेषं परिहरन्नाह—

**२७१. अणु महदिति तस्मिन् विशेषभावाद् विशेषाभावाच्च ॥ ११ ॥**

तस्मिन् एकस्मिन् वस्तुनीत्यर्थः। अणु महदिति उभयथा व्यवहारोऽस्ति। तत्र यदुक्तं परिमाणद्वयं नियमेन व्यधिकरणमिति तन्न युज्यते। अत्रोच्यते। सत्यमेवं अण्विति प्रतीतिव्यवहारविषय एव वस्तुनि महदिति प्रतीतिव्यवहारौ स्तः। तथा महदिति प्रतीतिव्यवहारविषय एव वस्तुनि अण्विति प्रतीतिव्यवहारौ। तथाऽपि अनयोः परिमाणयोः वैयधिकरण्यनियमोक्तिर्न विरुध्यते। न हि वस्तुतः अणौ महति च वस्तुतः महत्त्वमणुत्वं चास्ति, इति कृत्वा एवं प्रतियन्ति व्यवहरन्ति वा। अपि तु

अणौ महत्त्वप्रतीतिव्यवहारयोः अस्ति विशेषः अपेक्षारूपः । चन्दनपरमाणुः मृत्परमाण्वपेक्षया महानित्युच्यते । तदिदं महत्त्वं आपेक्षिकं औपचारिकम् । अपेक्षारूपमिमं विशेषं विना स्वभावतोऽणुत्वं मुख्यं तस्य । न च मुख्यौपचारिकयोरणुत्वमहत्त्वयोर्विरोधोऽस्ति येन वैयधिकरण्यनियमभङ्गो भवेत् । एवमेव स्वयं महति बदरीफले नारिकेलापेक्षया अणुत्वप्रतीतिव्यवहारौ सापेक्षौ । महत्त्वप्रतीतिव्यवहारौ तु निरपेक्षाविति तत्रापि विशेषभावः विशेषाभावश्च बोध्यः ।

ननु किमेवं मुख्यौपचारिकभावेन विरोधपरिहारः क्रियते । प्रथमं अणु पश्चान्महत् । अतो न विरोध इति कुतो नोच्यत इत्यत्राह—

२७२. एककालत्वात् ॥१२॥

अणुत्वे सत्येव महत्त्वं, महत्वे सत्येव अणुत्वं च किल व्यवहरन्ति । न चेदं एककालिकत्वं एकस्मिन् वस्तुनि मुख्ययोरणुत्वमहत्त्वयोः सम्भवति ।

२७३. दृष्टान्ताच्च ॥१३॥

अस्ति च दृष्टान्तः यत्र मिथो विरुद्धयोः द्वयोर्धर्मयोर्व्यवहारः क्रियते, ययोरेको मुख्यः अन्य औपचारिकः; स च मुखं चन्द्रः, अग्निर्माणवकः इत्यादिः । अत्र हि मुखत्वं माणवकत्वं च मुख्यम् । चन्द्रत्वं अग्नित्वं च औपचारिकम् ॥

२७४. अणुत्वमहत्त्वयोरणुत्वामहत्त्वाभावः कर्मगुणैर्व्याख्यातः ॥१४॥

अणु महदित्यनयोः विजातीययोर्द्वयोः परिमाणयोः यत्र वस्तुतः एकमस्ति तत्र अपरपरिमाणव्यवहारः आपेक्षिकः औपचारिक इत्युक्तम् । तेन वस्तुतः तत्र परिमाणान्तरस्याभाव एवेत्युक्तं भवति । इदानीं अनयोः परिमाणयोः सजातीयं विजातीयं वा परिमाणान्तरं नास्ति । अतः अण्वणु, महाणु, अणुमहत्, महामहदिति व्यवहाराः, औपचारिकतया नेयाः, इत्यभिप्रेत्य तयोस्तदभावमाह । अणुत्वे अणुत्वमहत्त्वयोः, महत्त्वे च तयोः अभावः कर्मगुणैः व्याख्यातो भवति । ज्ञापितो भवतीति यावत् । "एकद्रव्यमगुणं" इति कर्मणि गुणाभाव उक्तः । 'द्रव्याश्रय्यगुणवान्' इति गुणे गुणाभाव उक्तः । तेनैव अणुत्वमहत्त्वयोः अणुत्वमहत्त्वरूपगुणाभावः ज्ञापितो भवतीति भावः । ननु गुणे गुणाभावस्य पूर्वमुक्तत्वात् अणुत्वादेर्गुणस्य अणुत्वादिगुणवत्त्वं नास्तीति कामं ज्ञापितं भवति । कर्मणि गुणाभावोक्त्या तु कथं तद् ज्ञापितं भवेत् । उच्यते । अनन्तरसूत्रे तद् व्यक्तं भविष्यति ॥

२७५. **कर्मभिः कर्माणि गुणैश्च गुणा व्याख्याताः ॥१५॥**

कर्मभिः कर्माणि व्याख्यातानि निरूपितानि भवन्ति। कथमिति। निर्गुणानीति। कस्मात्। तानि हि कर्माणि 'क्रियावद् गुणवत् समवायि कारणमिति द्रव्य लक्षणम्' इति द्रव्यलक्षणभूतानि स्वयं अद्रव्याणि। न चाद्रव्याणि गुणवन्ति भवन्ति। गुणानामपि द्रव्यलक्षणत्वात् अद्रव्यत्वम्। एवमद्रव्यभूतैः कर्मभिः कर्माणि निर्गुणतया ज्ञापितानि भवन्ति। गुणैश्च गुणाः। एवञ्च पूर्वसूत्रे कर्मगुणैरद्रव्यैः अणुत्वमहत्त्वे अद्रव्यतया अणुत्वमहत्त्वरूपगुणरहिते इति ज्ञापिते भवतः इति विवक्षितत्वान्नोक्तशङ्कावकाश इति भावः।

२७६. **अणुत्वमहत्त्वाभ्यां कर्म गुणाश्च व्याख्याताः ॥१६॥**

यथा कर्मगुणैः अणुत्वमहत्त्वे अणुत्वमहत्त्वाभाववत्तया व्याख्याते भवतः तथा कर्मगुणा अपि अणुत्वमहत्त्वाभ्यां अणुत्वमहत्त्वाभाववत्तया व्याख्याता भवन्तीत्यर्थः। अद्रव्यत्वेन गुणसामान्यशून्यत्वादेवमिति भावः। कर्मणां गुणानां च गुणानाधारत्वप्रतिपत्तिदार्ढ्याय इत्थं पुन. पुनः भङ्ग्यन्तरेणोक्तिरिति ज्ञेयम् ॥

२७७. **एतेन दीर्घत्वह्रस्वत्वे व्याख्याते ॥१७॥**

अणुत्वमहत्त्वनिरूपणेनव दीर्घत्वह्रस्वत्वरूपे अपि परिमाणे निरूपिते भवत इत्यर्थः। दीर्घमेव वस्तु दीर्घतरवस्त्वन्तरापेक्षया ह्रस्वमिति व्यवह्रियते। तत्र दीर्घत्वं मुख्यम्। ह्रस्वत्वं तु औपचारिकमिति ज्ञेयमिति भावः। महदेव दीर्घं भवति, नामहत्। तत्र गोलाकारस्य वस्तुनः कन्तुकादेः महत्त्वेऽपि दीर्घत्वव्यवहाराभावात् महत्त्वादन्यद् दीर्घत्वम्। तत्र महत्त्वस्य कारणमुक्तम्। दीर्घत्वस्य तु दिगन्तरद्वयापेक्षया दिगन्तरद्वये विद्यमानावयवाधिक्यं कारणम्।

एकस्याणोः पार्श्वे अपरोऽणुः तस्य पार्श्वे अपरोऽणुः इत्येवमवस्थितैः त्रिभिरधिकैर्वा अणुभिरारब्धं द्रव्यं मुख्यवृत्त्या दीर्घं भवति। इहाणुरिति द्व्यणुकं विवक्षितम्। द्व्यणुकं केवलं ह्रस्वम्। अन्यत्र सर्वत्र ह्रस्वत्वव्यवहारः आपेक्षिकः। औपचारिकः।

नित्यानित्यभेदेन परिमाणविभागमभिप्रेत्य अनित्येषु द्रव्येषु अनित्यपरिमाणमस्तीत्याह—

२७८. **अनित्येऽनित्यम् ॥ १८ ॥**

अनित्य आश्रयः घटादिः यदा नश्यति तदा तदीयं परिमाणमपि नश्यति। अत। तदनित्यम् ॥

अणौ महत्त्वप्रतीतिव्यवहारयोः अस्ति विशेषः अपेक्षारूपः । चन्दनपरमाणुः मृत्परमाण्वपेक्षया महानित्युच्यते । तदिदं महत्त्वं आपेक्षिकं औपचारिकम् । अपेक्षारूपमिमं विशेषं विना स्वभावतोऽणुत्वं मुख्यं तस्य । न च मुख्यौपचारिकयोरणुत्वमहत्त्वयोर्विरोधोऽस्ति येन वैयधिकरण्यनियमभङ्गो भवेत् । एवमेव स्वयं महति बदरीफले नारिकेलापेक्षया अणुत्वप्रतीतिव्यवहारौ सापेक्षौ । महत्त्वप्रतीतिव्यवहारौ तु निरपेक्षाविति तत्रापि विशेषभावः विशेषाभावश्च बोध्यः ।

ननु किमेवं मुख्यौपचारिकभावेन विरोधपरिहारः क्रियते । प्रथमं अणु पश्चान्महत् । अतो न विरोध इति कुतो नोच्यत इत्यत्राह--

२७२. **एककालत्वात् ॥१२॥**

अणुत्वे सत्येव महत्त्वं, महत्वे सत्येव अणुत्वं च किल व्यवहरन्ति । न चेदं एककालिकत्वं एकस्मिन् वस्तुनि मुख्ययोरणुत्वमहत्त्वयोः सम्भवति ।

२७३. **दृष्टान्ताच्च ॥१३॥**

अस्ति च दृष्टान्तः यत्र मिथो विरुद्धयोः द्वयोर्धर्मयोर्व्यवहारः क्रियते, ययोरेको मुख्यः अन्य औपचारिकः; स च मुखं चन्द्रः, अग्निर्माणवकः इत्यादिः । अत्र हि मुखत्वं माणवकत्वं च मुख्यम् । चन्द्रत्वं अग्नित्वं च औपचारिकम् ॥

२७४. **अणुत्वमहत्त्वयोरणुत्वामहत्त्वाभावः कर्मगुणैर्व्याख्यातः ॥१४॥**

अणु महदित्यनयोः विजातीययोर्द्वयोः परिमाणयोः यत्र वस्तुतः एकमस्ति तत्र अपरपरिमाणव्यवहारः आपेक्षिकः औपचारिक इत्युक्तम् । तेन वस्तुतः तत्र परिमाणान्तरस्याभाव एवेत्युक्तं भवति । इदानीं अनयोः परिमाणयोः सजातीयं विजातीयं वा परिमाणान्तरं नास्ति । अतः अण्वणु, महाणु, अणुमहत्, महामहदिति व्यवहाराः, औपचारिकतया नेयाः,इत्यभिप्रेत्य तयोस्तदभावमाह । अणुत्वे अणुत्वमहत्त्वयोः, महत्त्वे च तयोः अभावः कर्मगुणैः व्याख्यातो भवति । ज्ञापितो भवतीति यावत् । "एकद्रव्यमगुणं" इति कर्मणि गुणाभाव उक्तः । 'द्रव्याश्रय्यगुणवान्' इति गुणे गुणाभाव उक्तः । तेनैव अणुत्वमहत्त्वयोः अणुत्वमहत्त्वरूपगुणाभावः ज्ञापितो भवतीति भावः । ननु गुणे गुणाभावस्य पूर्वमुक्तत्वात् अणुत्वादेर्गुणस्य अणुत्वादिगुणवत्त्वं नास्तीति कामं ज्ञापितं भवति । कर्मणि गुणाभावोक्त्या तु कथं तद् ज्ञापितं भवेत् । उच्यते । अनन्तरसूत्रे तद् व्यक्तं भविष्यति ॥

२८३. **तदभावादणु मनः ॥ २३ ॥**

तस्य विभवस्याभावात् मनः आकाशवत् महत् न भवति । शरीरान्तर्मात्रवृत्तित्वात् तस्य विभवाभावः । मध्यमपरिमाणे च न किञ्चित् प्रमाणम् । तस्मात् तदणु । द्रव्यं हि तत् । ततस्तत्र अवश्यं किञ्चित् परिमाणं वाच्यम् । तत्र अन्यस्यानुपपत्त्या अणुत्वं निश्चीयते ॥

२८४. **गुणैर्दिग्व्याख्याता ॥ २४ ॥**

गुणैः सर्वत्र विद्यमानपरत्वतत्प्रत्ययादिरूपैः गुणैः दिगपि महत्परिमाणवत्तया ज्ञापितैवेत्यर्थः ।

२८५. **कारणे कालाख्या ॥ २५ ॥**

सङ्कोचे प्रमाणाभावात् 'कारणे' इत्यस्य 'सर्वकार्यकारणे' इत्यर्थः । तस्मिन् काल इत्याख्येति पूर्वमेवोक्तम् । कार्याणि सर्वत्रोत्पद्यन्ते । अतः सर्वत्र कालो वर्तत इति सोऽपि विभुर्महांश्चेति सिद्ध्यति ।

स्वनिष्ठगुणवशादेव आकाशात्मनोः विभुत्वं सिद्ध्यति । परनिष्ठगुणवशात् दिक्कालयोः । अनेन विशेषेण एषां निरूपणे क्रमोल्लङ्घनम् । तदभावादिति विभवस्य तच्छब्देन परामर्शसौकर्याय मनसः मध्ये निवेशः ॥

**इति कणादसूत्रवृत्तौ**

सुगमायां

सप्तमेऽध्याये प्रथममाह्निकम्



अणौ महत्त्वप्रतीतिव्यवहारयोः अस्ति विशेषः अपेक्षारूपः । चन्दनपरमाणुः मृत्परमाण्वपेक्षया महानित्युच्यते । तदिदं महत्त्वं आपेक्षिकं औपचारिकम् । अपेक्षारूपमिमं विशेषं विना स्वभावतोऽणुत्वं मुख्यं तस्य । न च मुख्यौपचारिकयोरणुत्वमहत्त्वयोर्विरोधोऽस्ति येन वैयधिकरण्यनियमभङ्गो भवेत् । एवमेव स्वयं महति बदरीफले नारिकेलापेक्षया अणुत्वप्रतीतिव्यवहारौ सापेक्षौ । महत्त्वप्रतीतिव्यवहारौ तु निरपेक्षाविति तत्रापि विशेषभावः विशेषाभावश्च बोध्यः ।

ननु किमेवं मुख्यौपचारिकभावेन विरोधपरिहारः क्रियते । प्रथमं अणु पश्चान्महत् । अतो न विरोध इति कुतो नोच्यत इत्यत्राह--

२७२. एककालत्वात् ॥१२॥

अणुत्वे सत्येव महत्त्वं, महत्वे सत्येव अणुत्वं च किल व्यवहरन्ति । न चेदं एककालिकत्वं एकस्मिन् वस्तुनि मुख्ययोरणुत्वमहत्त्वयोः सम्भवति ।

२७३. दृष्टान्ताच्च ॥१३॥

अस्ति च दृष्टान्तः यत्र मिथो विरुद्धयोः द्वयोर्धर्मयोर्व्यवहारः क्रियते, ययोरेको मुख्यः अन्य औपचारिकः; स च मुखं चन्द्रः, अग्निर्माणवकः इत्यादिः । अत्र हि मुखत्वं माणवकत्वं च मुख्यम् । चन्द्रत्वं अग्नित्वं च औपचारिकम् ॥

२७४. अणुत्वमहत्त्वयोरणुत्वामहत्त्वाभावः कर्मगुणैर्व्याख्यातः ॥१४॥

अणु महदित्यनयोः विजातीययोर्द्वयोः परिमाणयोः यत्र वस्तुतः एकमस्ति तत्र अपरपरिमाणव्यवहारः आपेक्षिकः औपचारिक इत्युक्तम् । तेन वस्तुतः तत्र परिमाणान्तरस्याभाव एवेत्युक्तं भवति । इदानीं अनयोः परिमाणयोः सजातीयं विजातीयं वा परिमाणान्तरं नास्ति । अतः अण्वणु, महाणु, अणुमहत्, महामहदिति व्यवहाराः, औपचारिकतया नेयाः, इत्यभिप्रेत्य तयोस्तदभावमाह । अणुत्वे अणुत्वमहत्त्वयोः, महत्त्वे च तयोः अभावः कर्मगुणैः व्याख्यातो भवति । ज्ञापितो भवतीति यावत् । "एकद्रव्यमगुणं" इति कर्मणि गुणाभाव उक्तः । 'द्रव्याश्रय्यगुणवान्' इति गुणे गुणाभाव उक्तः । तेनैव अणुत्वमहत्त्वयोः अणुत्वमहत्त्वरूपगुणाभावः ज्ञापितो भवतीति भावः । ननु गुणे गुणाभावस्य पूर्वमुक्तत्वात् अणुत्वादेर्गुणस्य अणुत्वादिगुणवत्त्वं नास्तीति कामं ज्ञापितं भवति । कर्मणि गुणाभावोक्त्या तु कथं तद् ज्ञापितं भवेत् । उच्यते । अनन्तरसूत्रे तद् व्यक्तं भविष्यति ॥

ननु कुतो भ्रम इत्युच्यते। स्वसजातीयरहितत्वमेव तत्र एकत्वमित्युपचर्यते। तेन औपचारिकोऽयं प्रयोग इति कुतो नोच्यते। अत्राह—

**२६१. एकत्वाभावाद् भक्तिस्तु न विद्यते ॥ ६ ॥**

तुकारः उक्ताक्षेपनिवर्तकः। भक्तिरुपचारः। सा न विद्यते। न सम्भवतीति यावत्। स्वसजातीयद्वितीयत्वं हि स्वस्वसजातीयवृत्तिद्वित्वसङ्ख्यापूरकत्वम्। द्वित्वं च स्ववृत्ति यदेकत्वं यच्च स्वसजीयवृत्ति एकत्वं तदुभयवुद्धिरूपापेक्षाबुद्धिजन्यः सङ्ख्याविशेष इति वाच्यम्। न च वक्तुं शक्यते। स्वस्मिन् वा स्वजातीये रूपान्तरे वा एकत्वाभावात्। अतो नात्र उपचारः। अपि तु भ्रम एव। ननु आश्रयद्रव्यगतमेकत्वं तत्र आरोप्य एकत्वव्यवहार इति चेत् तर्हि आहार्यभ्रमोऽयं भवति। सर्वथा एकं रूपमित्यादिव्यवहारस्य आहार्योऽनाहार्यो वा भ्रम एव मूलम्। अथात्र एकपदस्य एकद्रव्यवृत्तित्वे लक्षणेति चेत् इष्टमेवैतत्। अयं कर्मगुणानामेकत्वनिषेधः एकपृथक्त्वनिषेधस्याप्युपलक्षकः ॥

एवं कर्मणां गुणानां च एकत्वैकपृथक्त्वयोरभाव उक्तः। अथ द्रव्य एव क्वचित् ते न स्त इत्याह—

**२६२. कार्यकारणयोरेकत्वैकपृथक्त्वाभावादेकत्वैकपृथक्त्वं न विद्यते ॥ ७ ॥**

कार्यकारणयोः घटकपालयोः पटतन्त्वोः एवमन्ययोश्च एकत्वैकपृथक्त्वं एतदुभयमित्यर्थः। न विद्यते नास्ति। कुतः। एकत्वैकपृथक्त्वाभावात्। एकत्वं च एकपृथक्त्वं च अनयोः समाहारः एकत्वैकपृथक्त्वम्। तस्याभावात्। परस्परं भिन्नत्वादित्यर्थः। समवायिकारणात् कार्यं हि भिन्नम्। न च मिथो भिन्नयोः द्वयोः घटपटयोरिव एकत्वं वा एकपृथक्त्वं वा सम्भवतीति। यद्यपि भेदप्रतिपादनतात्पर्येण एकत्वाभावमात्रस्य एकपृथक्त्वाभावमात्रस्य वा उक्तिः पर्याप्ता तथाऽपि एकत्वाभावस्येव एकपृथक्त्वाभावस्यापि भेदव्याप्यत्वेन तदुपस्थापनक्षमत्वव्यञ्जनाय तस्यापि ग्रहणमिति ज्ञेयम् ॥

**२६३. एतदनित्ययोर्व्याख्यातम् ॥८॥**

अनित्ययोः कार्यकारणयोः विद्यमानं एतत् एकत्वैकपृथक्त्वं व्याख्यातं अनित्यवृत्तिपरिमाणवत् अनित्यतया ज्ञेयमित्यर्थः। नित्यवर्ति नित्यमित्यपि ज्ञापितप्रायम्।

एकत्वनिरूपणेन अनेकैकत्वबुद्धिरूपापेक्षाबुद्धिजानि द्वित्वादीन्यपि सङ्ख्यान्तराणि निरूपितानि भवन्ति। एवमेकपृथक्त्वनिरूपणेन द्विपृथक्त्वादीन्यपि। एकत्व-

अणौ महत्त्वप्रतीतिव्यवहारयोः अस्ति विशेषः अपेक्षारूपः । चन्दनपरमाणुः मृत्परमाण्वपेक्षया महानित्युच्यते । तदिदं महत्त्वं आपेक्षिकं औपचारिकम् । अपेक्षारूपमिमं विशेषं विना स्वभावतोऽणुत्वं मुख्यं तस्य । न च मुख्यौपचारिकयोरणुत्वमहत्त्वयोर्विरोधोऽस्ति येन वैयधिकरण्यनियमभङ्गो भवेत् । एवमेव स्वयं महति बदरीफले नारिकेलापेक्षया अणुत्वप्रतीतिव्यवहारौ सापेक्षौ । महत्त्वप्रतीतिव्यवहारौ तु निरपेक्षाविति तत्रापि विशेषभावः विशेषाभावश्च बोध्यः ।

ननु किमेवं मुख्यौपचारिकभावेन विरोधपरिहारः क्रियते । प्रथमं अणु पश्चान्महत् । अतो न विरोध इति कुतो नोच्यत इत्यत्राह--

२७२. **एककालत्वात् ॥१२॥**

अणुत्वे सत्येव महत्त्वं, महत्वे सत्येव अणुत्वं च किल व्यवहरन्ति । न चेदं एककालिकत्वं एकस्मिन् वस्तुनि मुख्ययोरणुत्वमहत्त्वयोः सम्भवति ।

२७३. **दृष्टान्ताच्च ॥१३॥**

अस्ति च दृष्टान्तः यत्र मिथो विरुद्धयोः द्वयोर्धर्मयोर्व्यवहारः क्रियते, ययोरेको मुख्यः अन्य औपचारिकः; स च मुखं चन्द्रः, अग्निर्माणवकः इत्यादिः । अत्र हि मुखत्वं माणवकत्वं च मुख्यम् । चन्द्रत्वं अग्नित्वं च औपचारिकम् ॥

२७४. **अणुत्वमहत्त्वयोरणुत्वामहत्त्वाभावः कर्मगुणैर्व्याख्यातः ॥१४॥**

अणु महदित्यनयोः विजातीययोर्द्वयोः परिमाणयोः यत्र वस्तुतः एकमस्ति तत्र अपरपरिमाणव्यवहारः आपेक्षिकः औपचारिक इत्युक्तम् । तेन वस्तुतः तत्र परिमाणान्तरस्याभाव एवेत्युक्तं भवति । इदानीं अनयोः परिमाणयोः सजातीयं विजातीयं वा परिमाणान्तरं नास्ति । अतः अण्वणु, महाणु, अणुमहत्, महामहदिति व्यवहाराः, औपचारिकतया नेयाः,इत्यभिप्रेत्य तयोस्तदभावमाह । अणुत्वे अणुत्वमहत्त्वयोः, महत्त्वे च तयोः अभावः कर्मगुणैः व्याख्यातो भवति । ज्ञापितो भवतीति यावत् । "एकद्रव्यमगुणं" इति कर्मणि गुणाभाव उक्तः । 'द्रव्याश्रय्यगुणवान्' इति गुणे गुणाभाव उक्तः । तेनैव अणुत्वमहत्त्वयोः अणुत्वमहत्त्वरूपगुणाभावः ज्ञापितो भवतीति भावः । ननु गुणे गुणाभावस्य पूर्वमुक्तत्वात् अणुत्वादेर्गुणस्य अणुत्वादिगुणवत्त्वं नास्तीति कामं ज्ञापितं भवति । कर्मणि गुणाभावोक्त्या तु कथं तद् ज्ञापितं भवेत् । उच्यते । अनन्तरसूत्रे तद् व्यक्तं भविष्यति ॥

२९७. **कर्मभिः कर्माणि गुणैर्गुणाः अणुत्वमहत्वाभ्यामिति ॥१२॥**

कर्मभिः कर्माणि निर्गुणतया व्याख्यातानि। गुणैर्गुणाः तथा व्याख्याताः। अणुत्वमहत्त्वाभ्यां कर्मगुणाश्च व्याख्याता इति पूर्ववद्योज्यम्। एतद्ज्ञापनाय इतिकारः। संयोगविभागाभाववत्तथा व्याख्याता इति विशेषः।

इत्थं संयोगविभागयोः, गुणान्तरेषु, कर्मसु च संयोगविभागौ न स्त इत्युक्तम्। अथ कार्यकारणद्रव्ययोरपि नास्तीत्याह—

२९८. **युतसिद्ध्यभावात् कार्यकारणयोः संयोगविभागौ न विद्येते ॥१३॥**

घटकपालतन्तुपटादिरूपयोः कार्यकारणद्रव्ययोः संयोगविभागौ न स्तः। कुतः। युतसिद्ध्यभावात्। युते अमिश्रे परस्परं सम्बन्धरहिते। तयोः सिद्धिः स्थितिः विद्यमानता। तस्या अभावात्। परस्परं सम्बन्धं विना पृथक् स्थितयोर्द्रव्ययोः पश्चाज्जायमानः सम्बन्धः संयोगः। न च समवायिकारणतत्कार्यभूते द्रव्ये प्रथमं पृथक् स्थिते पश्चात् मिथः संबद्धे यथा घटतदन्तर्वर्तिजले। अतः पूर्वं पृथक् स्थित्यभावात् न तयोः संयोगः सम्बन्धः। यद्वा युते मिश्रे, प्रथमं पृथक् स्थिते पश्चात् सम्बद्धे तयोः सिद्धिः तदभावात्।

कार्यकारणे मिथः सम्बद्धे स्तः। न च ते पूर्वं पृथक् स्थिते पश्चादेवं सम्बद्धे। अतो युतसिद्ध्यभावात् न तयोः संयोगः सम्बन्धः। अपि तु अन्य एव। यु मिश्रणामिश्रणयोरिति धातुः। तत्रामिश्रणार्थकत्वे विद्यमानस्य सम्बन्धस्य पृथक् स्थितिपूर्वकत्वाभावादित्यर्थः। स प्रथममुक्तः। मिश्रणार्थकत्वे कार्यकारणयोः पृथक् स्थितिपूर्वकसम्बन्धाभावादित्यर्थः। सः अनन्तरमुक्तः॥

अथ शब्दार्थयोरपि संयोगो नास्तीति साधयन् प्रथमं हेतूनाह—

२९९. **गुणत्वात् ॥१४॥**

शब्दो हि गुणः। न च तस्य केनचिदन्येन संयोगः सम्भवति। गुणे गुणानङ्गीकारात्॥

३००. **गुणोऽपि विभाव्यते ॥१५॥**

यथा वाचकः शब्दः तथा अर्थोऽपि केषाञ्चित् शब्दानां वाच्यः गुणः विभाव्यते प्रतीयते। न च गुणयोः मिथः संयोगः सम्भवति। द्रव्यवत् गुणोऽपि शब्देन बोध्यते।

अणौ महत्त्वप्रतीतिव्यवहारयोः अस्ति विशेषः अपेक्षारूपः । चन्दनपरमाणुः मृत्परमाण्वपेक्षया महानित्युच्यते । तदिदं महत्त्वं आपेक्षिकं औपचारिकम् । अपेक्षारूपमिमं विशेषं विना स्वभावतोऽणुत्वं मुख्यं तस्य । न च मुख्यौपचारिकयोरणुत्वमहत्त्वयोर्विरोधोऽस्ति येन वैयधिकरण्यनियमभङ्गो भवेत् । एवमेव स्वयं महति बदरीफले नारिकेलापेक्षया अणुत्वप्रतीतिव्यवहारौ सापेक्षौ । महत्त्वप्रतीतिव्यवहारौ तु निरपेक्षाविति तत्रापि विशेषभावः विशेषाभावश्च बोध्यः ।

ननु किमेवं मुख्यौपचारिकभावेन विरोधपरिहारः क्रियते । प्रथमं अणु पश्चान्महत् । अतो न विरोध इति कुतो नोच्यत इत्यत्राह--

२७२. **एककालत्वात् ॥१२॥**

अणुत्वे सत्येव महत्त्वं, महत्वे सत्येव अणुत्वं च किल व्यवहरन्ति । न चेदं एककालिकत्वं एकस्मिन् वस्तुनि मुख्ययोरणुत्वमहत्त्वयोः सम्भवति ।

२७३. **दृष्टान्ताच्च ॥१३॥**

अस्ति च दृष्टान्तः यत्र मिथो विरुद्धयोः द्वयोर्धर्मयोर्व्यवहारः क्रियते, ययोरेको मुख्यः अन्य औपचारिकः; स च मुखं चन्द्रः, अग्निर्माणवकः इत्यादिः । अत्र हि मुखत्वं माणवकत्वं च मुख्यम् । चन्द्रत्वं अग्नित्वं च औपचारिकम् ॥

२७४. **अणुत्वमहत्त्वयोरणुत्वामहत्त्वाभावः कर्मगुणैर्व्याख्यातः ॥१४॥**

अणु महदित्यनयोः विजातीययोर्द्वयोः परिमाणयोः यत्र वस्तुतः एकमस्ति तत्र अपरपरिमाणव्यवहारः आपेक्षिकः औपचारिक इत्युक्तम् । तेन वस्तुतः तत्र परिमाणान्तरस्याभाव एवेत्युक्तं भवति । इदानीं अनयोः परिमाणयोः सजातीयं विजातीयं वा परिमाणान्तरं नास्ति । अतः अण्वणु, महाणु, अणुमहत्, महामहदिति व्यवहाराः, औपचारिकतया नेयाः,इत्यभिप्रेत्य तयोस्तदभावमाह । अणुत्वे अणुत्वमहत्त्वयोः, महत्त्वे च तयोः अभावः कर्मगुणैः व्याख्यातो भवति । ज्ञापितो भवतीति यावत् । "एकद्रव्यमगुणं" इति कर्मणि गुणाभाव उक्तः । 'द्रव्याश्रय्यगुणवान्' इति गुणे गुणाभाव उक्तः । तेनैव अणुत्वमहत्त्वयोः अणुत्वमहत्त्वरूपगुणाभावः ज्ञापितो भवतीति भावः । ननु गुणे गुणाभावस्य पूर्वमुक्तत्वात् अणुत्वादेर्गुणस्य अणुत्वादिगुणवत्त्वं नास्तीति कामं ज्ञापितं भवति । कर्मणि गुणाभावोक्त्या तु कथं तद् ज्ञापितं भवेत् । उच्यते । अनन्तरसूत्रे तद् व्यक्तं भविष्यति ॥

तस्मादागतः तद्ज्ञानादुत्पद्यते नियतस्यार्थस्य बोधः। चिरन्तनोऽद्यतनो वा सङ्केत एव शब्दार्थयोः सम्बन्ध इति भावः ।।

संयोगविभागनिरूपणं वृत्तम् । अथ क्रमप्राप्तं परत्वापरत्वनिरूपणं क्रियते—

**३०६. एकदिक्काभ्यामेककालाभ्यां सन्निकृष्टविप्रकृष्टाभ्यां परमपरञ्च ।।२१।।**

एका दिक् ययोः ते एकदिक्के । ताभ्यां सन्निकृष्टविप्रकृष्टाभ्यां वस्तुभ्यां परमपरं च वस्तु ज्ञेयम् । एकस्यां दिशि विद्यमानयोर्वस्तुनोर्मध्ये यत् विप्रकृष्टं दूरे स्थितं तेन परं परत्वगुणविशिष्टं वस्तु ज्ञेयम् । यत् सन्निकृष्टं तेन अपरं अपरत्वगुणविशिष्टं वस्तु ज्ञेयम् । विप्रकृष्टे वस्तुनि परत्वं सन्निकृष्टे अपरत्वं च वर्तेत इति ज्ञेयमिति भावः । परमपरं चेत्यत्र सन्निकृष्टविप्रकृष्टाभ्यामित्यस्य यथासङ्ख्यान्वयो न विवक्षितः । अपितु "अव्यक्तव्यक्तरूपाय स्थूलसूक्ष्मात्मने नमः" इत्यत्रेव प्रातिलोम्येनान्वयः । इमे दैशिकपरत्वापरत्वे । अथ कालिकपरत्वापरत्वे । एककालाभ्यां सन्निकृष्टविप्रकृष्टाभ्यां परमपरं च ज्ञेयमिति । एककालवर्तिनी द्वे शरीरे । तत्र एकं दीर्घकालात् पूर्वं जातम् । तत् परम् । तदपेक्षया अल्पकालात् पूर्वं जातमपरम् । दूरदेशसन्निहितदेशवर्तिनोः द्वयोः परस्परं दैशिकपरत्वापरत्वे । पूर्वकालानन्तरकालजातयोः मिथः कालिकपरत्वापरत्वे ।

ननु संयुक्तसंयोगपरम्पराया अल्पत्वं दैशिकः सन्निकर्षः । तस्या बहुत्वं विप्रकर्षः । एवं कालावच्छेदकक्रियापरम्पराबहुत्वं कालिकः विप्रकर्षः । तदल्पत्वं सन्निकर्षः । उभयविधोऽप्ययं विप्रकर्ष एव वस्तुनः परत्वम् । सन्निकर्ष एव च अपरत्वम् । न तु तदतिरिक्तौ गुणौ । न वा तत्र दिक्कालयोः कारणत्वम् । इति चेदत्राह—

**३०७. कारणपरत्वात् कारणापरत्वाच्च परत्वापरत्वे ।। २२ ।।**

न तावत् सन्निकर्षविप्रकर्षावेव परत्वापरत्वे । सन्निकर्षस्य व्यवधायकाल्पत्वरूपतया, विप्रकर्षस्य व्यवधायकबहुत्वरूपतया च सखण्डपदार्थत्वात् परत्वापरत्वयोश्च अखण्डरूपत्वात् । परं विप्रकृष्टं अपरं सन्निकृष्टं, इति विवरणेऽपि गन्धवती पृथिवीत्यत्र गन्धवत्त्वपृथिवीत्वयोरिवात्यन्तं भेदात् । एतद्ज्ञापनायैव पूर्वं "सन्निकृष्टविप्रकृष्टाभ्यां परमपरं च" इति विभक्तिभेदेन निर्देशः । तत्र एकस्यैव वस्तुनः आपेक्षिकपरत्वापरत्वयोः प्रतीत्या अनयोरपेक्षाबुद्धिजन्यत्वं, अत एवानित्यत्वं च सिद्धम् । तत्र अभिमता महती अल्पा वा कालावच्छेदकक्रियापरम्परा परमपरमिति प्रतीयमाने वस्तुनि न

वर्तते । तेन कथं सा तत्र परत्वं अपरत्वं वा जनयेदिति शङ्कायां सर्वाधारे काले अपेक्षाबुद्धिसहिता सा परत्वापरत्वे जनयति, परापरकालसंयोगश्च वस्तुनि परत्वमपरत्वं च जनयतीति सिद्धं कालस्य कारणत्वम् । एवं दिशि विद्यमाना संयुक्तसंयोगपरम्परा अपेक्षाबुद्धिसहिता तस्यां परत्वमपरत्वं च जनयति । परापरदिक्संयोगश्च वस्तुगतं परत्वमपरत्वं च जनयतीति ॥

**३०८. परत्वापरत्वयोः परत्वापरत्वाभावोऽणुमहत्वाभ्यां व्याख्यातः ॥ २३ ॥**

यथाऽणुत्वमहत्त्वयोः अणुत्वमहत्त्वाभावः, अद्रव्यत्वात्, तथा परत्वापरत्वयोः परत्वापरत्वाभावः । । अद्रव्यत्वस्य तुल्यत्वात् ॥

**३०९. कर्मभिः कर्माणि ॥ २४ ॥**

कर्मभिरद्रव्यैः कर्माणि गुणरहिततया अत एव परत्वापरत्वरहिततया व्याख्याताः ।

**३१०. गुणैर्गुणाः ॥ २५ ॥**

गुणैरद्रव्यैः गुणाः गुणरहिततया अत एव परत्वापरत्वरहिततया व्याख्याताः । अत्र प्राक्तनरीतिमनुसृत्य "अणुत्वमहत्त्वाभ्यां कर्मगुणाश्च व्याख्याताः" इत्यप्यनुसन्धेयं प्रतीमः ।

बाह्यगुणनिरूपणं वृत्तम् । अथात्मगुणनिरूपणं अनन्तरेऽध्याये करिष्यति । अत्र तु प्रसङ्गात् षट्पदार्थ्यां निरूपणाय अवशिष्टं अन्तिमं समवायं निरूपयन् प्रथमं तस्य प्रमाणं लक्षणं च दर्शयति—

**३११. इहेदमिति यतः कार्यकारणयोः स समवायः ॥ २६ ॥**

इह अस्मिन् वस्तुनि इदं एतद् वस्तु वर्तते, इति इत्येवंरूपः प्रत्ययः यतः यस्मात् सम्बन्धाद् भवति स सम्बन्धः समवायः समवायशब्दवाच्यः । नियामकं सम्बन्धविशेषं विना इहेदमिति नियतः प्रत्ययो न भवितुमर्हति । अतः एतत्प्रत्ययलिङ्गकमनुमानं समवाये प्रमाणम् । आधाराधेयभावहेतुभूतसम्बन्धत्वं तस्य लक्षणमिति भावः । न च भूतले घट इति प्रत्ययहेतौ संयोगे अतिव्याप्तिरिति शङ्क्यम् । आधाराधेयभावाव्यभिचारिसम्बन्धत्वस्य लक्षणत्वात् । समानाधिकरणयोर्मिथः संयुक्तयोरपि घटयोः आकाशघटयोश्च आधाराधेयभावविरहेण संयोगस्य तद्व्यभिचारित्वात् । अवयवेषु अवयवी, द्रव्ये गुणः कर्म च, द्रव्यगुणकर्मसु सामान्यम्, नित्य-

द्रव्येषु विशेषः, इति यत्र यत्र समवायः तत्र तत्र आधाराधेयभावस्य सत्त्वात् । न च कालिकसम्बन्धेऽतिव्याप्तिः । तद्भिन्नत्वस्यापि लक्षणे निवेशनात् । इहेदमिति प्रत्ययस्य बाह्यवस्तुविषयतया बाह्यगुणनिरूपणानुपदं समवायनिरूपणमिति ज्ञेयम् ।

पूर्वं कार्यकारणभूतयोर्द्रव्ययोः संयोगो नास्तीत्युक्तम् । कस्तर्हि तयोः सम्बन्ध इति जिज्ञासाशमनाय इह कार्यकारणयोरित्युच्यते । न तु इतरव्यवच्छेदाय । "इहेदमिति यतः स समवायः" इत्येतावतैव लक्षणसिद्धेः कार्यकारणयोरित्यस्य तद्घटकत्वायोगात् ॥

इत्थं इहेदमिति प्रत्ययनिर्वाहकतया समवायं प्रसाध्य तस्य द्रव्यादिभ्योऽतिरिक्तपदार्थत्वं साधयन्नाह—

**३१२. द्रव्यत्वगुणत्वप्रतिषेधो भावेन व्याख्यातः ॥ २७ ॥**

तस्येत्यध्याहारः । तस्य समवायस्य द्रव्यत्वप्रतिषेधः द्रव्यत्वाभावः, द्रव्यपदार्थे अनन्तर्भाव इति यावत् । गुणत्वप्रतिषेधः गुणत्वाभावः, गुणेष्वनन्तर्भाव इति यावत्, भावेन सत्तासामान्येन व्याख्यातः ज्ञापितो भवति । यथा गुणसामान्यशून्यत्वात् कस्यचित् कार्यस्य समवायिकारणत्वाभावाच्च सत्ता न द्रव्यं तथा तत एव हेतोः समवायो न द्रव्यम् । यथा गुणकर्मसु च भावात् सत्ता न गुणः तथा समवायोऽपि गुणकर्मानुबन्धित्वान्न गुणः । चलनात्मककर्मत्वाभावस्य स्पष्टत्वात् तत्प्रतिषेध इह न कण्ठोक्तः । आधाराधेयभावनिर्वाहकतया सिद्ध्यन् समवायः आधेयभूताभ्यां सामान्यविशेषाभ्यामतिरिक्ततयैव सिद्ध्यतीति तद्व्यतिरेकाभिधानमपि नापेक्षितम् । अतः द्रव्यादिभ्यः पञ्चभ्यः पदार्थेभ्योऽतिरिक्तः समवाय इति भावः ॥

समवायस्य एकत्वं साधयति—

**३१३. तत्त्वं भावेन ॥ २८ ॥**

तस्य तत्त्वं एकत्वं, भावेन सत्तासामान्येन व्याख्यातं ज्ञापितं भवति । इहेदमिति लिङ्गाविशेषाद्विशेषलिङ्गाभावाच्च एकः समवाय इति भावः ॥

इति

**कणादसूत्रवृत्तौ सुगमायां**

**सप्तमेऽध्याये द्वितीयं**

**आह्निकम्**

---

## अथाष्टमेऽध्याये

### प्रथममाह्निकम्

परत्वापरत्वनिरूपणानन्तरं क्रमप्राप्तं बुद्धिनिरूपणमारभते। बुद्धिर्ज्ञानमिति पर्यायौ।

**३१४. द्रव्येषु ज्ञानं व्याख्यातम् ॥ १ ॥**

द्रव्येषु द्रव्यनिरूपणपरेषु द्वितीयतृतीयचतुर्थेषु अध्यायेषु तदुपयोगितया रूपरसादिकमिव ज्ञानमपि केनचिदाकारेण निरूपितमिति स्मारयत्यनेन सूत्रेण। "आत्मेन्द्रियार्थसन्निकर्षात् यन्निष्पद्यते तदन्यत्" इति आत्मादिव्यतिरिक्तो ज्ञानरूपो गुणोऽस्तीति निरूपितमिति भावः। उपरि विशेषकथनाय इदं स्मारणम्। इह ज्ञानं प्रत्यक्षरूपम्।

**३१५. तत्रात्मा मनश्चाप्रत्यक्षे ॥ २ ॥**

तत्र आत्मेन्द्रियघटादिसन्निकर्षात् निष्पद्यमाने ज्ञाने आत्मा न प्रत्यक्षः न विषयः। मनश्च न प्रत्यक्षम्। यथा मनोऽन्यद्वा करणं न प्रत्यक्षं तथा कर्ताऽऽत्माऽपि न प्रत्यक्ष इति भावः। केचिद् घटादिज्ञाने आत्मनोऽपि विषयत्वमाहुः घटमहं जानामीति। तन्निराकरणमिह क्रियते। तत्रात्मनो विषयत्वे न किमपि प्रमाणम्। अयं घट इत्येव प्रत्यक्षाभिलापादिति सूत्रकारो मन्यते। एतेन ज्ञानं स्वयमपि तत्र न विषय इत्यप्यस्य मतमिति ज्ञेयम्। सूत्रद्वयमिदं प्रकारान्तरेणापि व्याख्यातुमुचितमिति भाति।

**३१४. द्रव्येषु ज्ञानं व्याख्यातम् ॥**

द्रव्येष्विति विषयसप्तमी। द्रव्यविषयकं ज्ञानं निरूपितम्। द्रव्यविषयकं ज्ञानं अनेन कारणेन उत्पद्यत इति तदभावे नोत्पद्यत इति निरूपितमिति भावः। पृथिव्यप्तेजस्सु "महत्यनेकद्रव्यवत्त्वाद्रूपाच्चोपलब्धिः। अद्रव्यद्रव्यत्वात्परमाणावनुपलब्धिः" इत्युक्तम्। वायौ "रूपसंस्काराभावादनुपलब्धिः" इति च। अनेन आकाशकालदिशामप्यनुपलब्धिर्व्यञ्जिता।

**३१५. तत्रात्मा मनश्चाप्रत्यक्षे ॥**

तत्र तेषु द्रव्येषु वाय्वाकाशकालदिश इव आत्ममनसी अपि अप्रत्यक्षे। रूप-

राहित्यस्य तुल्यत्वात् । ननु ज्ञायत एवेदम् । किमर्था कण्ठोक्तिरिति चेत् आत्मनोऽहम्प्रत्ययविषयत्वं पूर्वमुक्तम् । तेन घटपटादिवत् परकीयबाह्यप्रत्यक्षविषयत्वं मा शङ्कीत्येवमर्थं आत्मनोऽप्रत्यक्षत्वमत्रोच्यते । नवद्रव्यप्रत्यक्षाप्रत्यक्षप्रकरणावसानव्यञ्जनाय नवसु चरमस्य मनसोऽप्यप्रत्यक्षत्वमुच्यत इति विभावनीयम् ।

### ३१६. ज्ञाननिर्देशे ज्ञाननिष्पत्तिविधिरुक्तः ॥३॥

ज्ञानस्य निर्देशे दव्यविशेषसाधनाय अभिधाने क्रियमाणे ज्ञानस्य तस्य निष्पत्तेः विधिः प्रकारः उक्तः प्रतिपादितः । "आत्मेन्द्रियार्थसन्निकर्षात् यन्निष्पद्यते तदन्यत्" इति, "आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम्" इति च आत्ममनस्साधनाय ज्ञाननिर्देशः कृतः । तत्र आत्मा इन्द्रियैः संयुज्यते । इन्द्रियाणि अर्थैः संयुज न्ते । ततो ज्ञानं उत्पद्यत इति ज्ञानोत्पत्तिप्रकार उक्तो भवतीति भावः । मनःसिद्धौ इन्द्रियशब्देन मनसोऽपि ग्रहणात् आत्मा मनसा, मनश्चक्षुरादिना, चक्षुरादिकं घटादिनेति सुग्रहमेव । इत्थं ज्ञानसामान्यस्य कारणमुक्तं 'स्मारितम् । अथ ज्ञानविशेषाणां विशेषकारणान्युच्यन्ते ॥

### ३१७. गुणकर्मसु सन्निकृष्टेषु ज्ञाननिष्पत्तेर्द्रव्यं कारणम् ॥४॥

गुणस्य कर्मणो वा प्रत्यक्षरूपे ज्ञाने द्रव्यं स्वरूपतः कारणम् । कस्मात् । सन्निकर्षे सति हि प्रत्यक्षम् । गुणकर्मणोः प्रत्यक्षे च संयुक्तसमवायः सन्निकर्षः । द्रव्ये सत्येव इन्द्रियसंयुक्ते तस्मिन् समवाय इत्ययं सन्निकर्षः सम्पन्नो भवेदिति । द्रव्यप्रत्यक्षे द्रव्यस्य साक्षादेव कारणत्वं न वक्तव्यमिति द्रव्यं विहाय गुणकर्ममात्रग्रहणम् ॥

### ३१८. सामान्यविशेषेषु सामान्यविशेषाभावात् तत एव ज्ञानम् ॥५॥

गुणकर्मानन्तरपदार्थस्य सामान्यस्यापि प्रत्यक्षे पूर्ववद् द्रव्यं कारणमेव । अथापि तद्विशेष्यकज्ञानस्य स्वरसतोऽनुदयात् तदनुक्त्वा तत्प्रकारकप्रत्यक्षमनन्तरसूत्रे वक्ष्यन् तस्य प्रकारान्तरविशिष्टतया प्रतीतिर्नास्तीत्याह । सामान्यस्य विशेषस्य सामान्यविशेषस्य वा प्रत्यक्षं तत एव तस्मादेव सामान्यात् विशेषात् सामान्यविशेषाद्वा भवति, न तु सामान्यान्तरात् सामान्यविशेषान्तराद्वा । कुतः । सामान्यान्तरादेरभावात् ।

सामान्यविशेषप्रत्यक्षे सामान्यविशेषाः स्वयमेव कारणम् । नान्येऽपि सामान्यविशेषाः । तदभावात् । सामान्यविशेषाः स्वरूपेणैव प्रत्यक्षे प्रकाशन्ते । न धर्मान्तरविशिष्टतयेति भावः ।

३१९. **सामान्यविशेषापेक्षं द्रव्यगुणकर्मसु ॥६॥**

ज्ञानमित्यनुवर्तते । द्रव्यगुणकर्मविषयकं ज्ञानं सामान्यविशेषसापेक्षम् । तत्कारणकमित्यर्थः। द्रव्यगुणकर्मप्रत्यक्षे विशेषणतया सामान्यादिकं भाति। अतः इदं तत्र कारणमिति भावः। अयं घटः सन्निति प्रत्यक्षे सत्ताविशिष्टतया घटः प्रकाशते। सत्ता तु स्वरूपेण। न धर्मान्तरविशिष्टतया। अतः सत्ताज्ञानं सामान्यादिनिरपेक्षम्। तदेव तु घटज्ञानं भवत् सत्तारूपसामान्यसापेक्षम्। अयं घट इति प्रत्यक्षे घटत्वरूपो विशेषः स्वरूपेण, घटव्यक्तिः घटत्वरूपविशेषवत्तया च प्रकाशेते। इदं द्रव्यं इदं पृथिवीत्यत्र द्रव्यत्वपृथिवीत्वे सामान्यविशेषौ स्वरूपेण प्रकाशेते। द्रव्यव्यक्तिविशेषस्तु तद्वत्तया। एवं द्रव्ये ज्ञानं सामान्यविशेषापेक्षम्। एवं गुणे कर्मणि च बोद्धव्यम्।

३२०. **द्रव्ये द्रव्यगुणकर्मापेक्षम् ॥७॥**

द्रव्ये ज्ञानं द्रव्यगुणकर्माण्यपेक्ष्य भवति। अयं पुरुषो दण्डीति प्रत्यक्षे दण्डरूपद्रव्यापेक्षम्। स्थूलः नीलः इत्यादिप्रत्यक्षे गुणापेक्षम्। गच्छति पचतीति प्रत्यक्षे कर्मापेक्षम्।

द्रव्यगुणकर्मणां त्रयाणामपि सामान्यविशेषापेक्षज्ञानत्वं साधर्म्यं पूर्वसूत्रे उक्तम्। अथ द्रव्यस्य गुणकर्मणोश्च वैधर्म्यं ज्ञापयन् अत्र द्रव्यज्ञानस्य द्रव्यगुणकर्मापेक्षत्वमाह। गुणकर्मज्ञानस्येदं नास्तीत्यर्थसिद्धम्।

३२१. **गुणकर्मसु गुणकर्माभावाद् गुणकर्मापेक्षं न विद्यते ॥८॥**

गुणेषु कर्मसु च ज्ञानं गुणकर्मापेक्षं प्रकारतया गुणान्तरक्रियान्तरे अपेक्षमाणं नास्ति। कुतः। गुणे गुणो वा कर्म वा नास्ति। एवं कर्मण्यपि गुणो वा कर्म वा नास्ति। इदं पूर्वमेवोक्तम्। अतः गुणकर्मप्रकारकं गुणकर्मप्रत्यक्षं नास्तीत्यर्थः। पूर्वसूत्र एव गुणकर्मणोः ज्ञानस्य द्रव्यगुणकर्मसापेक्षत्वविरहो ज्ञापितः। तथाऽपि गुणकर्मणोः द्रव्याश्रयत्वाभावस्य सुप्रसिद्धत्वात् तज्ज्ञानस्य गुणो द्रव्यवान् इत्याद्याकारत्वं न सम्भवतीति न वक्तव्यम्। चतुर्विंशतिर्गुणाः, रूपमुत्पद्यते, पञ्च कर्माणि, कर्मानुवर्तते इत्यादिरीत्या गुणकर्माश्रयत्वस्य तु व्यवहारबाहुल्यात् प्रकारतया तदवगाहि प्रत्यक्षं गुणकर्मणोर्भवितुमर्हतीति अस्ति भ्रमस्यावकाशः। अत इह स्पष्टोक्तिरिति ज्ञेयम्॥

३२२. **समवायिनः श्वैत्यात् श्वैत्यबुद्धेश्च श्वेते बुद्धिः । ते कार्य-कारणभूते ॥९॥**

द्रव्ये समवैति समवायसम्बन्धेन वर्तते इति समवायि । तस्मात् श्वैत्यात् विषयभूतात् श्वेतरूपात्, श्वैत्यबुद्धेश्च तद्विषयकज्ञानाच्च विशेषणज्ञानरूपात् श्वेते द्रव्ये बुद्धिर्भवति अयं श्वेत इति । पूर्वं प्रत्यक्षस्य तत्तत्सापेक्षत्वमुक्तम् । तत्र सापेक्षत्वं नाम किमिति चेत् तदिह विवियते । अश्वे श्वेतरूपं वर्तते । संयुक्तसमवायात् सन्निकर्षात् तस्य बुद्धिः ज्ञानं प्रत्याक्षात्मकं जायते । ततः "अश्वः श्वेत" इति विशिष्टप्रत्यक्षं जायते । ते या प्रथममुत्पन्ना श्वैत्यबुद्धिः या च पश्चादुत्पन्ना श्वेते श्वैत्यवति द्रव्ये बुद्धिः, इमे उभे मिथः कार्यकारणभूते । कारणं च कार्यञ्च कार्यकारणे । अल्पाच्तरत्वात् कार्यशब्दस्य पूर्वनिपातः । पूर्वोत्पन्ना श्वैत्यबुद्धिः कारणम् । अनन्तरोत्पन्ना श्वेतद्रव्यबुद्धिः तस्य कारणस्य कार्यम् । गुणसापेक्षमित्युक्ते "गुणात् सन्निकृष्टात् विषयभूतात् तस्य ज्ञानं जायते । तस्मात् विशेषणज्ञानात् कारणभूतात् तद्गुणवद्द्रव्यज्ञानात्मकं विशिष्टज्ञानं कार्यभूतं जायते" इति कारणभूतविशेषणज्ञानद्वारा तदपेक्षं भवतीति प्रतिपत्तव्यमिति भावः । श्वैत्यस्य स्वज्ञानद्वारा विशिष्टज्ञानं प्रति कारणत्वेऽपि विषयतया साक्षादपि कारणत्वमस्तीति श्वैत्यात् श्वैत्यबुद्धेश्चेति तुल्यवत् कारणत्वोक्तिरविरुद्धा ।

कारणभूतं विशेषणज्ञानं निर्विकल्पकमाहुः । अन्यत्र सविकल्पकम् ॥

३२३. **द्रव्येष्वनितरेतरकारणाः ॥१०॥**

बुद्धिरिति अनुषज्य बहुवचनान्ततया विपरिणमयितव्यम् । द्रव्येषु द्रव्यविषया बुद्धयः इतरेतरकारणा न भवन्ति । अयं घट इति बुद्धिः इदानीं जायते । अन्यदा घट इति । पुनरन्यदा स्तम्भ इति । आसां बुद्धीनां स्वतन्त्रत्वात् अन्योन्यकारणकत्वं न भवति । एका बुद्धिरितरस्याः कारणं न भवतीत्यर्थः । आसां बुद्धीनां मध्ये कार्यकारणभावो नास्तीति यावत् । यद्यपि दण्डदण्डिबुद्ध्योः तन्तुपटवद्बुद्ध्योश्च अस्ति कार्यकारणभावः तथाऽपि द्रव्यबुद्धयः सर्वाः द्रव्यान्तरबुद्धिकारणा न भवन्तीति नात्र विवक्षितम् । अपि तु द्रव्येषु केषाञ्चन बुद्धिः द्रव्यान्तरबुद्धिकारणा न भवति । यथा अयं घट इति बुद्धिः पटबुद्धिं नापेक्षत इति । एवंविधा न भवति श्वैत्यरूपगुणवति द्रव्ये बुद्धिः । श्वैत्यबुद्धिकारणकत्वादिति पूर्वोक्तस्यार्थस्य व्यतिरेकदृष्टान्तप्रदर्शनपरमिदं सूत्रम् । घटोऽयं नीलो महानिति गुणद्वयबुद्ध्योरपि मिथः कार्यकारणभावाभावात् ते अन्यत्र निदर्शनतामर्हतः ॥

**३१९. सामान्यविशेषापेक्षं द्रव्यगुणकर्मसु ॥६॥**

ज्ञानमित्यनुवर्तते । द्रव्यगुणकर्मविषयकं ज्ञानं सामान्यविशेषसापेक्षम् । तत्कारणकमित्यर्थः । द्रव्यगुणकर्मप्रत्यक्षे विशेषणतया सामान्यादिकं भाति । अतः इदं तत्र कारणमिति भावः । अयं घटः सन्निति प्रत्यक्षे सत्ताविशिष्टतया घटः प्रकाशते । सत्ता तु स्वरूपेण । न धर्मान्तरविशिष्टतया । अतः सत्ताज्ञानं सामान्यादिनिरपेक्षम् । तदेव तु घटज्ञानं भवत् सत्तारूपसामान्यसापेक्षम् । अयं घट इति प्रत्यक्षे घटत्वरूपो विशेषः स्वरूपेण, घटव्यक्तिः घटत्वरूपविशेषवत्तया च प्रकाशेते । इदं द्रव्यं इदं पृथिवीत्यत्र द्रव्यत्वपृथिवीत्वे सामान्यविशेषौ स्वरूपेण प्रकाशेते । द्रव्यव्यक्तिविशेषस्तु तद्वत्तया । एवं द्रव्ये ज्ञानं सामान्यविशेषापेक्षम् । एवं गुणे कर्मणि च बोद्धव्यम् ।

**३२०. द्रव्ये द्रव्यगुणकर्मापेक्षम् ॥७॥**

द्रव्ये ज्ञानं द्रव्यगुणकर्माण्यपेक्ष्य भवति । अयं पुरुषो दण्डीति प्रत्यक्षे दण्डरूपद्रव्यापेक्षम् । स्थूलः नीलः इत्यादिप्रत्यक्षे गुणापेक्षम् । गच्छति पचतीति प्रत्यक्षे कर्मापेक्षम् ।

द्रव्यगुणकर्मणां त्रयाणामपि सामान्यविशेषापेक्षज्ञानत्वं साधर्म्यं पूर्वसूत्रे उक्तम् । अथ द्रव्यस्य गुणकर्मणोश्च वैधर्म्यं ज्ञापयन् अत्र द्रव्यज्ञानस्य द्रव्यगुणकर्मापेक्षत्वमाह । गुणकर्मज्ञानस्येदं नास्तीत्यर्थसिद्धम् ।

**३२१. गुणकर्मसु गुणकर्माभावाद् गुणकर्मापेक्षं न विद्यते ॥८॥**

गुणेषु कर्मसु च ज्ञानं गुणकर्मापेक्षं प्रकारतया गुणान्तरक्रियान्तरे अपेक्षमाणं नास्ति । कुतः । गुणे गुणो वा कर्म वा नास्ति । एवं कर्मण्यपि गुणो वा कर्म वा नास्ति । इदं पूर्वमेवोक्तम् । अतः गुणकर्मप्रकारकं गुणकर्मप्रत्यक्षं नास्तीत्यर्थः । पूर्वसूत्र एव गुणकर्मणोः ज्ञानस्य द्रव्यगुणकर्मसापेक्षत्वविरहो ज्ञापितः । तथाऽपि गुणकर्मणोः द्रव्याश्रयत्वाभावस्य सुप्रसिद्धत्वात् तज्ज्ञानस्य गुणो द्रव्यवान् इत्याद्याकारत्वं न सम्भवतीति न वक्तव्यम् । चतुर्विंशतिर्गुणाः, रूपमुत्पद्यते, पञ्च कर्माणि, कर्मानुवर्तते इत्यादिरीत्या गुणकर्माश्रयत्वस्य तु व्यवहारबाहुल्यात् प्रकारतया तदवगाहि प्रत्यक्षं गुणकर्मणोर्भवितुमर्हतीति अस्ति भ्रमस्यावकाशः । अत इह स्पष्टोक्तिरिति ज्ञेयम् ॥

## अथाष्टमेऽध्याये

### द्वितीयमाह्निकम्

**३२५. अयमेष त्वया कृतं भोजयैनमिति बुद्ध्यपेक्षम् ॥१॥**

बुद्ध्यपेक्षं प्रत्यक्षमुक्तम् । अथाद्य तदपेक्षं शब्दमाह । अयं पुरोवर्ती पुरुषः एष सदाचारसम्पन्नः श्रोत्रियः । पूर्वं तस्य आचारसम्पन्नत्वं श्रोत्रियत्वं च ज्ञातवत एव एवं व्यवहारो भवति । त्वया कृतमिति व्यवहारोऽपि त्वच्छब्दवाच्यपुरुषस्य प्राक्तनीं क्रियां ज्ञातवत एव । एनमित्यन्वादेशः । प्रथमं इमं प्रति किञ्चिदुक्तमिति जानत एव एवमन्वादेशप्रयोगो भवति । एवमेते शब्दाः पूर्ववृत्तविषयबुद्ध्यपेक्षाः । अत्र बुद्धिरिति प्राक्तनोऽनुभवो वा तज्जन्याऽद्यतनी स्मृतिर्वा ग्राह्या । "अयं विशिष्टः । त्वया पचनं कृतम् । अतस्त्वमेनं भोजये"ति वाक्यैकवाक्यताऽत्राभिप्रेतेति युक्तं वक्तुम् ।

**३२६. दृष्टेषु भावाददृष्टेष्वभावात् ॥२॥**

दृष्टेषु पूर्वं ज्ञातेष्वेव पुरुषादिषु ईदृशव्यवहारस्य भावात सत्त्वात्, अदृष्टेषु तेषु अभावात् असत्त्वाच्च अन्वयव्यतिरेकाभ्यां "अयमेष" "इति बुद्ध्यपेक्षम" इति पूर्वेण योज्यम् ॥

**३२७. अर्थ इति द्रव्यगुणकर्मसु ॥३॥**

अर्थं इतीदं पदं द्रव्यगुणकर्मसु वर्तत इति शेषः । तद्वाचकमित्यर्थः । आत्मेन्द्रियार्थसन्निकर्षजं ज्ञानमित्युक्तम् । तत्र ज्ञाने निरूपिते, इन्द्रियाणां यैः सन्निकर्षः तस्य कारणं, तान् अर्थशब्देन विवक्षितान् विषयान् विशदीकरोति इदं सूत्रम् । यद्यपि सत्तादिसामान्यमपि विषयः, तत्सन्निकर्षोऽपि तज्ज्ञानकारणं, तथाऽपि भोगार्थमर्थ्यमानानामेव विषयाणां इन्द्रियार्था इति प्रसिद्धत्वात् रूपरसादीनां गुणानां, तदाश्रयाणां द्रव्याणां, दर्शनश्रवणादीनां कर्मणां चैव तादृशविषयत्वात्, एते त्रय एव पदार्था अर्थपदवाच्यतयोक्ता इति ज्ञेयम् ।

**३२८. द्रव्येषु पञ्चात्मकत्वं प्रतिषिद्धम् ॥४॥**

द्रव्येषु कस्यापि भूतपञ्चकसमुदायरूपत्वं नास्तीति पूर्वमुक्तम् । पृथिव्यादित्रिकरूपत्वं च प्रतिषिद्धमित्यपीहाभिप्रेतम् । इन्द्रियार्थसन्निकर्षेत्यत्र अर्थशब्दार्थ

**३१९. सामान्यविशेषापेक्षं द्रव्यगुणकर्मसु ॥६॥**

ज्ञानमित्यनुवर्तते । द्रव्यगुणकर्मविषयकं ज्ञानं सामान्यविशेषसापेक्षम् । तत्कारणकमित्यर्थः । द्रव्यगुणकर्मप्रत्यक्षे विशेषणतया सामान्यादिकं भाति । अतः इदं तत्र कारणमिति भावः । अयं घटः सन्निति प्रत्यक्षे सत्ताविशिष्टतया घटः प्रकाशते । सत्ता तु स्वरूपेण । न धर्मान्तरविशिष्टतया । अतः सत्ताज्ञानं सामान्यादिनिरपेक्षम् । तदेव तु घटज्ञानं भवत् सत्तारूपसामान्यसापेक्षम् । अयं घट इति प्रत्यक्षे घटत्वरूपो विशेषः स्वरूपेण, घटव्यक्तिः घटत्वरूपविशेषवत्तया च प्रकाशेते । इदं द्रव्यं इदं पृथिवीत्यत्र द्रव्यत्वपृथिवीत्वे सामान्यविशेषौ स्वरूपेण प्रकाशेते । द्रव्यव्यक्तिविशेषस्तु तद्वत्तया । एवं द्रव्ये ज्ञानं सामान्यविशेषापेक्षम् । एवं गुणे कर्मणि च बोद्धव्यम् ।

**३२०. द्रव्ये द्रव्यगुणकर्मापेक्षम् ॥७॥**

द्रव्ये ज्ञानं द्रव्यगुणकर्माण्यपेक्ष्य भवति । अयं पुरुषो दण्डीति प्रत्यक्षे दण्डरूपद्रव्यापेक्षम् । स्थूलः नीलः इत्यादिप्रत्यक्षे गुणापेक्षम् । गच्छति पचतीति प्रत्यक्षे कर्मापेक्षम् ।

द्रव्यगुणकर्मणां त्रयाणामपि सामान्यविशेषापेक्षज्ञानत्वं साधर्म्यं पूर्वसूत्रे उक्तम् । अथ द्रव्यस्य गुणकर्मणोश्च वैधर्म्यं ज्ञापयन् अत्र द्रव्यज्ञानस्य द्रव्यगुणकर्मापेक्षत्वमाह । गुणकर्मज्ञानस्येदं नास्तीत्यर्थसिद्धम् ।

**३२१. गुणकर्मसु गुणकर्माभावाद् गुणकर्मापेक्षं न विद्यते ॥८॥**

गुणेषु कर्मसु च ज्ञानं गुणकर्मापेक्षं प्रकारतया गुणान्तरक्रियान्तरे अपेक्षमाणं नास्ति । कुतः । गुणे गुणो वा कर्म वा नास्ति । एवं कर्मण्यपि गुणो वा कर्म वा नास्ति । इदं पूर्वमेवोक्तम् । अतः गुणकर्मप्रकारकं गुणकर्मप्रत्यक्षं नास्तीत्यर्थः । पूर्वसूत्र एव गुणकर्मणोः ज्ञानस्य द्रव्यगुणकर्मसापेक्षत्वविरहो ज्ञापितः । तथाऽपि गुणकर्मणोः द्रव्याश्रयत्वाभावस्य सुप्रसिद्धत्वात् तज्ज्ञानस्य गुणो द्रव्यवान् इत्याद्याकारत्वं न सम्भवतीति न वक्तव्यम् । चतुर्विंशतिर्गुणाः, रूपमुत्पद्यते, पञ्च कर्माणि, कर्मानुवर्तते इत्यादिरीत्या गुणकर्माश्रयत्वस्य तु व्यवहारबाहुल्यात् प्रकारतया तदवगाहि प्रत्यक्षं गुणकर्मणोर्भवितुमर्हतीति अस्ति भ्रमस्यावकाशः । अत इह स्पष्टोक्तिरिति ज्ञेयम् ॥

रूपवत् तेज एव प्रकृतिः। स्पर्शमात्रग्राहकस्य अत एव गन्धरसरूपत्रितयासमानाधिकरणस्पर्शवतः त्वगिन्द्रियस्य तादृशस्पर्शवान् वायुरेव प्रकृतिः।

शब्दमात्रग्राहकस्य श्रोत्रस्य आकाशात्मकस्य कार्यत्वाभावात् न प्रकृतिचिन्तेति बोध्यम्।

इति

कणादसूत्रवृत्तौ

सुगमायां

अष्टमेऽध्याये द्वितीयमाह्निकम्

———

## अथ नवमेऽध्याये

### प्रथममाह्निकम्

३३१. **क्रियागुणव्यपदेशाभावात् प्रागसत् ॥ १ ॥**

ज्ञानात्मकगुणनिरूपणप्रकरणमनुवर्तते । तत्र बाह्यभावप्रत्यक्षमुक्तम् । अद्य अभावप्रत्यक्षं विवक्षितम् । तत्र प्रथमं अभाव एव निरूप्यते ।

कार्यं वस्तु उत्पत्तेः प्राक् असत् अविद्यमानं भवति । विद्यमानं हि स्वोचितां क्रियां कुर्यात्, गुणाधारः स्यात्, "अयं घटः, इममादाय जलमाहर" इत्यादिशाब्दव्यवहारविषयः स्यात् । न चोत्पत्तेः प्राक् कस्यचिद्वस्तुन एते धर्माः सन्ति । अतस्तत् प्रागसत् । प्रागसत्त्वं प्रागभावः । एतेन प्रागभावो नाम कश्चिदस्तीति तन्निरूपणं कृतं भवति ॥

३३२. **सदसत् ॥ २ ॥**

सत् अद्य विद्यमानं कार्यं वस्तु पश्चात् असद् अविद्यमानं भवति । क्रियागुणव्यपदेशाभावात् । पश्चादसत्त्वं ध्वंसः । एतेन प्रध्वंसाभावो निरूपितो भवति ॥

३३३. **असतः क्रियागुणव्यपदेशाभावादर्थान्तरम् ॥ ३ ॥**

ननु सत् असदिति वस्तुनो विशेषणे । कार्यं घटपटादि अद्य सत् पूर्वं पश्चाच्च असदिति । तथा च सत्त्वासत्त्वे एकस्य वस्तुनो द्वे अवस्थे । तत्र प्रागभावः प्रध्वंसाभाव इत्यतिरिक्तः पदार्थः कथं सिद्ध्यतीत्यत्रेदमुच्यते । अवस्था नाम धर्मविशेषयोगः । सत्त्वमवस्थेति युज्यते । देशविशेषकालविशेषसम्बन्धो हि सत्त्वं नाम । उपलब्धिविषयत्वं वा । इदं घटपटादिस्वरूपे सति भवति । अत इयं तस्यावस्था । प्राक् पश्चाच्च धर्मिस्वरूपमेव नास्ति । क्रियागुणव्यपदेशाभावात् । तस्य असत्त्वाभिधानमवस्थायोगः कथं भवेत् । तस्मात् अभावं नाम पदार्थान्तरमभ्युपगम्य प्रागभावप्रतियोगित्वं प्रागसत्त्वम्, प्रध्वंसाभावप्रतियोगित्वं पश्चादसत्त्वमिति असत्त्वव्यवहार उपपादनीयः ।

पूर्वं पश्चाच्च असतो वस्तुनः क्रियागुणव्यपदेशाभावात् यतः स्वरूपमेव नास्ति अतस्तस्य असत्त्वरूपावस्थाविशेषस्यासम्भवात् असत्त्वव्यवहारनिर्वाहकं अर्थान्तरमङ्गीकार्यम् । तदर्थान्तरमभाव इति सूत्रार्थः ।

३३४. **सच्चासत्** ।। ४ ।।

तृतीयमभावं निरूपयति । चकार एवार्थे । सदेवासत् । पूर्वोक्तं द्विविधमपि असत्त्वं सत्त्वासमानकालिकम् । इदं तु तृतीयमसत्त्वं सत्त्वसमानकालिकम् । सदेव वस्तु असदपि भवति । कस्मात् । क्रियागुणव्यपदेशाभावात् । यथा घटः स्वस्वरूपेण सन्नेव पटस्वरूपेणासन् भवति । पटक्रियागुणव्यपदेशानामभावात् । इदमसत्त्वं अन्योन्याभाव इति भेद इति चोच्यते ॥

३३५. **यच्चान्यदसदतस्तदसत्** ।। ५ ।।

चतुर्थमभावं निरूपयति । अतः उक्तात् त्रिविधादसतः अन्यत् अतिरिक्तं यदसत् तत् असत्, प्रागसत्, पश्चादसत् वर्तमानमेव असत् इति परिच्छेदं विना केवलमसद् भवति । त्रैकालिकासदिति यावत् । अनेन अत्यन्ताभाव उक्तः । वायौ रूपस्य ईदृशोऽभावः । चकारः तच्चासदिति समुच्चयार्थः । अभावनिरूपणावसानज्ञापनार्थश्च ।

३३६. **असदिति भूतप्रत्यक्षाभावात् भूतस्मृतेर्विरोधिप्रत्यक्षवत्** ।। ६ ।।

एवं विषयं निरूप्य तत्प्रत्यक्षं सकारणमाह । असदिति असदित्येतत् । असदिति ज्ञानमित्यर्थः । तत् भूतप्रत्यक्षाभावात् भूतस्मृतेश्च उत्पद्यते । भूतं वस्तु । यद्वस्तु असदित्युच्यते अथवा प्रतीयते तस्य वस्तुनः प्रत्यक्षाभावे सति, स्मृतौ सत्यां च तद्वस्तु असदिति ज्ञानं जायते । भूतले फले दृश्यमाने "इह फलमसदिति" ज्ञानानुदयात् अस्य ज्ञानस्य फलप्रत्यक्षाभावः कारणम् । अदृश्यमानस्य फलस्य स्मरणाभावेऽपि तस्य ज्ञानस्यानुदयात् तत्स्मरणमपि कारणम् । तत्र दृष्टान्तमाह-विरोधीति । नकुलविहरणदेशे 'सर्पा इह असन्तः' इति यथा तथेति । विरोधिप्रत्यक्ष इवेति सप्तम्यन्ताद्वतिः । विरोधिप्रत्यक्षे सति यथा विरोध्यन्तरप्रत्यक्षाभावात् तत्स्मृतेश्च विरोध्यन्तरमसदिति ज्ञानं भवति तथा भूतले फलाभावे फलप्रत्यक्षाभावात् फलस्मृतेश्च फलमसदिति ज्ञानं भवतीति भावः ॥

३३७. **तथाऽभावे भावप्रत्यक्षत्वाच्च** ।। ७ ।।

यथा असति वस्तुनि तत्प्रत्यक्षाभावात् तत्स्मृतेश्च 'तदत्र असदिति' बुद्धिर्जायते । तथा तदभावेऽपि ताभ्यामेव हेतुभ्यां घटाभाववान् अयं देश इति । अथवाऽत्र घटाभाव इति । परं तु अत्र भावप्रत्यक्षत्वमपि अपरो हेतुः । भावः प्रतियोगी पदार्थः । तस्य प्रत्यक्षत्वं प्रत्यक्षयोग्यत्वम् । प्रत्यक्षयोग्यघटादिप्रतियोगिकत्वाभावे उक्तहेतुभ्यां प्रत्यक्षात्मिका बुद्धिर्जायत इत्यर्थः ।

# अथ नवमेऽध्याये

## प्रथममाह्निकम्

### ३३१. क्रियागुणव्यपदेशाभावात् प्रागसत् ।। १ ।।

ज्ञानात्मकगुणनिरूपणप्रकरणमनुवर्तते । तत्र बाह्यभावप्रत्यक्षमुक्तम् । अद्य अभावप्रत्यक्षं विवक्षितम् । तत्र प्रथमं अभाव एव निरूप्यते ।

कार्यं वस्तु उत्पत्तेः प्राक् असत् अविद्यमानं भवति । विद्यमानं हि स्वोचितां क्रियां कुर्यात्, गुणाधारः स्यात्, "अयं घटः, इममादाय जलमाहर" इत्यादिशाब्द-व्यवहारविषयः स्यात् । न चोत्पत्तेः प्राक् कस्यचिद्वस्तुन एते धर्माः सन्ति । अतस्तत् प्रागसत् । प्रागसत्त्वं प्रागभावः । एतेन प्रागभावो नाम कश्चिदस्तीति तन्निरूपणं कृतं भवति ।।

### ३३२. सदसत् ।। २ ।।

सत् अद्य विद्यमानं कार्यं वस्तु पश्चात् असद् अविद्यमानं भवति । क्रियागुण-व्यपदेशाभावात् । पश्चादसत्त्वं ध्वंसः । एतेन प्रध्वंसाभावो निरूपितो भवति ।।

### ३३३. असतः क्रियागुणव्यपदेशाभावादर्थान्तरम् ।। ३ ।।

ननु सत् असदिति वस्तुनो विशेषणे । कार्यं घटपटादि अद्य सत् पूर्वं पश्चाच्च असदिति । तथा च सत्त्वासत्त्वे एकस्य वस्तुनो द्वे अवस्थे । तत्र प्रागभावः प्रध्वंसाभाव इत्यतिरिक्तः पदार्थः कथं सिद्ध्यतीत्यत्रेदमुच्यते । अवस्था नाम धर्मविशेषयोगः । सत्त्व-मवस्थेति युज्यते । देशविशेषकालविशेषसम्बन्धो हि सत्त्वं नाम । उपलब्धिविषयत्वं वा । इदं घटपटादिस्वरूपे सति भवति । अत इयं तस्यावस्था । प्राक् पश्चाच्च धर्मि-स्वरूपमेव नास्ति । क्रियागुणव्यपदेशाभावात् । तस्य असत्त्वाभिधानमवस्थायोगः कथं भवेत् । तस्मात् अभावं नाम पदार्थान्तरमभ्युपगम्य प्रागभावप्रतियोगित्वं प्रागसत्त्वम्, प्रध्वंसाभावप्रतियोगित्वं पश्चादसत्त्वमिति असत्त्वव्यवहार उपपादनीयः ।

पूर्वं पश्चाच्च असतो वस्तुनः क्रियागुणव्यपदेशाभावात् यतः स्वरूपमेव नास्ति अतस्तस्य असत्त्वरूपावस्थाविशेषस्यासम्भवात् असत्त्वव्यवहारनिर्वाहकं अर्थान्त-रमङ्गीकार्यम् । तदर्थान्तरमभाव इति सूत्रार्थः ।

तत् आत्ममनसोः संयोगविशेषात् । संयोगस्य विशेषः मनसः इन्द्रियसंयोगाप्रयोजकत्वम् । ईदृशेन आत्ममनःसंयोगेन आत्मनः स्वप्रत्यक्षं जायते ॥

३४२. **तथा द्रव्यान्तरेषु** ॥ १२ ॥

पूर्वसूत्रे आत्मप्रत्यक्षमित्यतः प्रत्यक्षमिति विभज्येहानुपज्यते । द्रव्यान्तरप्रत्यक्षमपि आत्मन्येव जायते । अस्यैव ज्ञातृत्वात् । तदिदं द्रव्यान्तरविषयकं प्रत्यक्षमपि तथा आत्ममनसोः संयोगविशेषादेव जायते । अत्र संयोगस्य विशेषः इन्द्रियसंयोगप्रयोजकत्वम् । आत्ममनसोः संयोगः आत्मप्रत्यक्षे द्रव्यान्तरप्रत्यक्षे चावश्यकः । तत्र इन्द्रियेण मनःसंयोगाहेतुः स संयोगः आत्मप्रत्यक्षं जनयति । तद्धेतुस्तु द्रव्यान्तरप्रत्यक्षं जनयतीति भावः ॥

३४३. **असमाहितान्तःकरणाः उपसंहृतसमाधयस्तेषां च** ॥ १३॥

ये निष्पन्नयोगा योगिनः ते यदा समाधौ वर्तन्ते तदा संयमबलेन ऐन्द्रियिकं च अतीन्द्रियं च सर्वं वस्तु प्रत्यक्षयन्ति । तदलौकिकं प्रत्यक्षम् । यदा तु ते समाधिं न कुर्वन्ति, असमाहितमनसो भवन्ति, अथवा समाधिं कृत्वा ततो व्युत्थिता भवन्ति तदा ते अयोगिवदेव वर्तन्ते । तेषां च अस्यामवस्थायां अन्येषामिव आत्मनि आत्ममनसोः सन्निकर्षविशेषात् स्वप्रत्यक्षं वा द्रव्यान्तरप्रत्यक्षं वा लौकिकं भवतीत्यर्थः ॥

३४४. **तत्समवायात् कर्मगुणेषु** ॥ १४ ॥

तच्छब्देन द्रव्यान्तराणि परामृश्यन्ते । तेषु समवायात तत्समवायरूपात् सन्निकर्षात् तद्वर्तिषु कर्मसु गुणेषु च प्रत्यक्षं भवति ॥

३४५. **आत्मसमवायादात्मगुणेषु** ॥ १५ ॥

मनःसंयुक्तात्मसमवायरूपात् सन्निकर्षात् आत्मवर्तिषु गुणेषु सुखदुःखादिषु प्रत्यक्षं भवति । आत्मनि कर्माभावात् गुणमात्रोक्तिः । बाह्यवस्तुप्रत्यक्षनिरूपणानन्तरं आन्तरस्यात्मनः प्रत्यक्षनिरूपणं क्रमप्राप्तम् । ज्ञानकारणे आत्मेन्द्रियार्थसन्निकर्षे घटकानां अर्थानामिन्द्रियाणां च विमर्शानन्तरं प्रातिलोम्येन आत्ममनसोरुपस्थितौ तत्सन्निकर्षस्य विभिन्नज्ञानकत्वोक्तिरपि सङ्गतिबलात् प्रसक्ता । तत्प्रसङ्गाच्च द्रव्यान्तरसमवेतकर्मगुणप्रत्यक्षस्य आत्मसमवेतगुणप्रत्यक्षस्य च हेतुभूतः सन्निकर्ष उच्यत इति

# अथ नवमेऽध्याये

## प्रथममाह्निकम्

३३१. **क्रियागुणव्यपदेशाभावात् प्रागसत् ॥ १ ॥**

ज्ञानात्मकगुणनिरूपणप्रकरणमनुवर्तते । तत्र बाह्यभावप्रत्यक्षमुक्तम् । अद्य अभावप्रत्यक्षं विवक्षितम् । तत्र प्रथमं अभाव एव निरूप्यते ।

कार्यं वस्तु उत्पत्तेः प्राक् असत् अविद्यमानं भवति । विद्यमानं हि स्वोचितां क्रियां कुर्यात्, गुणाधारः स्यात्, "अयं घटः, इममादाय जलमाहर" इत्यादिशाब्दव्यवहारविषयः स्यात् । न चोत्पत्तेः प्राक् कस्यचिद्वस्तुन एते धर्माः सन्ति । अतस्तत् प्रागसत् । प्रागसत्त्वं प्रागभावः । एतेन प्रागभावो नाम कश्चिदस्तीति तन्निरूपणं कृतं भवति ॥

३३२. **सदसत् ॥ २ ॥**

सत् अद्य विद्यमानं कार्यं वस्तु पश्चात् असद् अविद्यमानं भवति । क्रियागुणव्यपदेशाभावात् । पश्चादसत्त्वं ध्वंसः । एतेन प्रध्वंसाभावो निरूपितो भवति ॥

३३३. **असतः क्रियागुणव्यपदेशाभावादर्थान्तरम् ॥ ३ ॥**

ननु सत् असदिति वस्तुनो विशेषणे । कार्यं घटपटादि अद्य सत् पूर्व पश्चाच्च असदिति । तथा च सत्त्वासत्त्वे एकस्य वस्तुनो द्वे अवस्थे । तत्र प्रागभावः प्रध्वंसाभाव इत्यतिरिक्तः पदार्थः कथं सिद्ध्यतीत्यत्रेदमुच्यते । अवस्था नाम धर्मविशेषयोगः । सत्त्वमवस्थेति युज्यते । देशविशेषकालविशेषसम्बन्धो हि सत्त्वं नाम । उपलब्धिविषयत्वं वा । इदं घटपटादिस्वरूपे सति भवति । अत इयं तस्यावस्था । प्राक् पश्चाच्च धर्मिस्वरूपमेव नास्ति । क्रियागुणव्यपदेशाभावात् । तस्य असत्त्वाभिधानमवस्थायोगः कथं भवेत् । तस्मात् अभावं नाम पदार्थान्तरमभ्युपगम्य प्रागभावप्रतियोगित्वं प्रागसत्त्वम्, प्रध्वंसाभावप्रतियोगित्वं पश्चादसत्त्वमिति असत्त्वव्यवहार उपपादनीयः ।

पूर्वं पश्चाच्च असतो वस्तुनः क्रियागुणव्यपदेशाभावात् यतः स्वरूपमेव नास्ति अतस्तस्य असत्त्वरूपावस्थाविशेषस्यासम्भवात् असत्त्वव्यवहारनिर्वाहकं अर्थान्तरमङ्गीकार्यम् । तदर्थान्तरमभाव इति सूत्रार्थः ।

## अथ नवमेऽध्याये

### द्वितीयमाह्निकम्

३४६. **अस्येदं कार्यं कारणं संयोगि विरोधि समवायि चेति लैङ्गिकम् ॥ १ ॥**

प्रत्यक्षानन्तरं अनुमानमुच्यते । लिङ्गादागतं लैङ्गिकम् अनुमितिरूपं ज्ञानम् । इदं विविधात् लिङ्गादुत्पद्यते । कथं वैविध्यम् । अस्य कारणस्य इदं कार्यमिति क्वचित् कारणं व्यापकं भवति कार्यं च व्याप्यम् । एवं अस्य कार्यस्येदं कारणं, अस्य द्रव्यस्येदं संयोगि, अस्य वस्तुन इदं विरोधि, अस्य ( अस्मिन् ) इदं समवायीति । अस्य नियमेन एतत्सम्बन्धीत्यर्थः । तेनात्र व्याप्तिरभिप्रेता । कार्येण नदीपूरेण पूर्वदेशे वृष्टिरनुमीयते । सस्यवृद्ध्या कारणेन कर्षकस्य हर्षः । उष्णेन जलेन अग्निसंयोगिनाऽग्निः । रक्तमुखेन नकुलेन हतः सर्पः । सौरभेण तद्वद् द्रव्यम् । प्रसिद्धि-पूर्वकत्वादपदेशस्येति व्याप्तिरेवात्र प्रधानम् । नान्यः कश्चन सम्बन्ध इति पूर्वमेवेद-मवधृतम् ॥

३४७. **अस्येदं कार्यकारणसम्बन्धश्चावयवाद् भवति ॥ २ ॥**

अस्येदं कार्यकारणेति पूर्वसूत्रमुच्यते । तत्राभिप्रेतो यः नियतसम्बन्धः व्याप्त्य-भिधानः सः अवयवाद् भवति । अवयवः अङ्गम् । व्याप्तिनिश्चयस्याङ्गं उदाहरणम् । तस्माद् भवति । निश्चितो भवतीत्यर्थः । पूर्वं नदीपूराणां वृष्टिहेतुकत्वदर्शनेन नदीपूर-वृष्ट्योः व्याप्तिं निश्चिनोति पुरुषः । अद्यतनं नदीपूरं पश्यन् सः अयमपि वृष्टि-हेतुकः पूर्वदृष्टवत् इत्यनुमिनोति । अतो व्याप्त्यवधारणं पूर्वमावश्यकम् । तद् उदाहरणे भूयोदर्शनेन भवतीति भावः । अवयवादित्यत्र किं पाठान्तरमस्तीति युक्तमन्वेष्टुम् ॥

३४८. **एतेन शाब्दं व्याख्यातम् ॥ ३ ॥**

एतेन अनुमाननिरूपणेन, शाब्दं शब्दप्रभवं ज्ञानं व्याख्यातं अनुमितिरूपं दर्शितं भवतीत्यर्थः । शब्दोऽपि अनुमानमेव । न तु पृथक् प्रमाणमिति भावः । चैत्रः पचतीति द्वे पदे उच्चार्येते । ताभ्यां द्वौ अर्थौ बोध्येते । तयोर्मिथः संसर्गस्य तु बोधकं किमपि नास्ति । अतः सः अनुमानगोचर इति ॥

# अथ नवमेऽध्याये

## प्रथममाह्निकम्

### ३३१. क्रियागुणव्यपदेशाभावात् प्रागसत् ॥ १ ॥

ज्ञानात्मकगुणनिरूपणप्रकरणमनुवर्तते । तत्र बाह्यभावप्रत्यक्षमुक्तम् । अद्य अभावप्रत्यक्षं विवक्षितम् । तत्र प्रथमं अभाव एव निरूप्यते ।

कार्यं वस्तु उत्पत्तेः प्राक् असत् अविद्यमानं भवति । विद्यमानं हि स्वोचितां क्रियां कुर्यात्, गुणाधारः स्यात्, "अयं घटः, इममादाय जलमाहर" इत्यादिशाब्द-व्यवहारविषयः स्यात् । न चोत्पत्तेः प्राक् कस्यचिद्वस्तुन एते धर्माः सन्ति । अतस्तत् प्रागसत् । प्रागसत्त्वं प्रागभावः । एतेन प्रागभावो नाम कश्चिदस्तीति तन्निरूपणं कृतं भवति ॥

### ३३२. सदसत् ॥ २ ॥

सत् अद्य विद्यमानं कार्यं वस्तु पश्चात् असद् अविद्यमानं भवति । क्रियागुण-व्यपदेशाभावात् । पश्चादसत्त्वं ध्वंसः । एतेन प्रध्वंसाभावो निरूपितो भवति ॥

### ३३३. असतः क्रियागुणव्यपदेशाभावादर्थान्तरम् ॥ ३ ॥

ननु सत् असदिति वस्तुनो विशेषणे । कार्यं घटपटादि अद्य सत् पूर्वं पश्चाच्च असदिति । तथा च सत्त्वासत्त्वे एकस्य वस्तुनो द्वे अवस्थे । तत्र प्रागभावः प्रध्वंसाभाव इत्यतिरिक्तः पदार्थः कथं सिद्ध्यतीत्यत्रेदमुच्यते । अवस्था नाम धर्मविशेषयोगः । सत्त्व-मवस्थेति युज्यते । देशविशेषकालविशेषसम्बन्धो हि सत्त्वं नाम । उपलब्धिविषयत्वं वा । इदं घटपटादिस्वरूपे सति भवति । अत इयं तस्यावस्था । प्राक् पश्चाच्च धर्मि-स्वरूपमेव नास्ति । क्रियागुणव्यपदेशाभावात् । तस्य असत्त्वाभिधानमवस्थायोगः कथं भवेत् । तस्मात् अभावं नाम पदार्थान्तरमभ्युपगम्य प्रागभावप्रतियोगित्वं प्रागसत्त्वम्, प्रध्वंसाभावप्रतियोगित्वं पश्चादसत्त्वमिति असत्त्वव्यवहार उपपादनीयः ।

पूर्वं पश्चाच्च असतो वस्तुनः क्रियागुणव्यपदेशाभावात् यतः स्वरूपमेव नास्ति अतस्तस्य असत्त्वरूपावस्थाविशेषस्यासम्भवात् असत्त्वव्यवहारनिर्वाहकं अर्थान्त-रमङ्गीकार्यम् । तदर्थान्तरमभाव इति सूत्रार्थः ।

संस्कारजन्यं स्वप्नान्तरं स्वप्नान्तिकमुच्यते । पूर्वस्वप्नस्यान्ते निवृत्तौ जायमानमिति ।

३५४. **धर्माच्च** ॥ ९ ॥

धर्माच्च स्वप्नो भवति । न संस्कारादेव । यस्मिन् स्वप्ने देवः अन्यो वा प्रादुर्भूय किञ्चित् कर्तव्यमादिशति, तदनुसृत्य क्रियमाणा जागरे प्रवृत्तिः फलवती भवति, स स्वप्नो धर्मात् पुण्यात् । धर्म इति अदृष्टोपलक्षणम् । अधर्मादपि सत्यः स्वप्नो भवितुमर्हति । जागरे अनिरूपितयाथार्थ्योऽपि स्वप्नः तात्कालिकसुखदुःखहेतुभूतराज्यलाभपुत्रमरणादिदर्शी धर्माधर्महेतुको भवेत् । धातुवैषम्यं संस्कारविशेषोद्बोधनद्वारा स्वप्नविशेषहेतुः, न स्वतन्त्रहेतुरिति युक्तम् ॥

३५५. **इन्द्रियदोषात् संस्कारदोषाच्चाविद्या** ॥ १० ॥

अयथार्थज्ञानं निरूप्यते । अयथार्थप्रत्यक्षरूपा तथाविधानुमितिरूपा वाऽविद्या इन्द्रियदोषान्मूलभूताद् भवति । अयथार्थस्मृतिस्वप्नरूपा तु संस्कारदोषाद् भवति । काचकामलालोकमान्द्यादिरिन्द्रियदोषः । संस्कारस्य दोषः अपटुत्वम् ।

३५६. **तद् दुष्टज्ञानम्** ॥ ११ ॥

अविद्येति विद्याया अभाव उक्त इति न मन्तव्यम् । दुष्टज्ञानमिह विवक्षितम् । अतोऽस्य इन्द्रियसंस्कारदोषजन्यत्वमुपपद्यते । अभावस्य हि तदनुपपन्नम् । दुष्टं अयथार्थं, विफलं विपरीतफलं च ।

३५७. **अदुष्टं विद्या** ॥ १२ ॥

इदानीं विद्याया अपि लक्षणं सुवचमित्यभिप्रेत्याह । विद्याशब्दो ज्ञानार्थाद् विदधातोर्निष्पन्नः । ज्ञानं च दुष्टमदुष्टं वा भवेत् । तत्र दुष्टज्ञानमपि विद्येति स्यात् । तन्न । यददुष्टं ज्ञानं तदेव विद्याशब्दाभिधेयम् । न दुष्टं ज्ञानमपि । अदुष्टे रूढत्वात् ॥

३५८. **आर्षं सिद्धदर्शनं च धर्मेभ्यः** ॥ १३ ॥

उक्तेभ्यो ज्ञानेभ्योऽतिरिक्तमपि यथार्थज्ञानमस्ति । तदत्राह । ऋषीणां सम्बन्धि आर्षम् । इदं प्रतिभारूपतया प्रातिभमित्यप्युच्यते । इन्द्रियनिरपेक्षं जायमानमिदं त्रैकालिकवस्तुविषयं यथार्थज्ञानम् । सिद्धदर्शनं अञ्जनविशेषादिसंस्कृतैरिन्द्रियैर्जा-

# अथ नवमेऽध्याये

## प्रथममाह्निकम्

### ३३१. क्रियागुणव्यपदेशाभावात् प्रागसत् ॥ १ ॥

ज्ञानात्मकगुणनिरूपणप्रकरणमनुवर्तते । तत्र बाह्यभावप्रत्यक्षमुक्तम् । अद्य अभावप्रत्यक्षं विवक्षितम् । तत्र प्रथमं अभाव एव निरूप्यते ।

कार्यं वस्तु उत्पत्तेः प्राक् असत् अविद्यमानं भवति । विद्यमानं हि स्वोचितां क्रियां कुर्यात्, गुणाधारः स्यात्, "अयं घटः, इममादाय जलमाहर" इत्यादिशाब्दव्यवहारविषयः स्यात् । न चोत्पत्तेः प्राक् कस्यचिद्वस्तुन एते धर्माः सन्ति । अतस्तत् प्रागसत् । प्रागसत्त्वं प्रागभावः । एतेन प्रागभावो नाम कश्चिदस्तीति तन्निरूपणं कृतं भवति ॥

### ३३२. सदसत् ॥ २ ॥

सत् अद्य विद्यमानं कार्यं वस्तु पश्चात् असद् अविद्यमानं भवति । क्रियागुणव्यपदेशाभावात् । पश्चादसत्त्वं ध्वंसः । एतेन प्रध्वंसाभावो निरूपितो भवति ॥

### ३३३. असतः क्रियागुणव्यपदेशाभावादर्थान्तरम् ॥ ३ ॥

ननु सत् असदिति वस्तुनो विशेषणे । कार्यं घटपटादि अद्य सत् पूर्वं पश्चाच्च असदिति । तथा च सत्त्वासत्त्वे एकस्य वस्तुनो द्वे अवस्थे । तत्र प्रागभावः प्रध्वंसाभाव इत्यतिरिक्तः पदार्थः कथं सिद्ध्यतीत्यत्रेदमुच्यते । अवस्था नाम धर्मविशेषयोगः । सत्त्वमवस्थेति युज्यते । देशविशेषकालविशेषसम्बन्धो हि सत्त्वं नाम । उपलब्धिविषयत्वं वा । इदं घटपटादिस्वरूपे सति भवति । अत इयं तस्यावस्था । प्राक् पश्चाच्च धर्मिस्वरूपमेव नास्ति । क्रियागुणव्यपदेशाभावात् । तस्य असत्त्वाभिधानमवस्थायोगः कथं भवेत् । तस्मात् अभावं नाम पदार्थान्तरमभ्युपगम्य प्रागभावप्रतियोगित्वं प्रागसत्त्वम्, प्रध्वंसाभावप्रतियोगित्वं पश्चादसत्त्वमिति असत्त्वव्यवहार उपपादनीयः ।

पूर्वं पश्चाच्च असतो वस्तुनः क्रियागुणव्यपदेशाभावात् यतः स्वरूपमेव नास्ति अतस्तस्य असत्त्वरूपावस्थाविशेषस्यासम्भवात् असत्त्वव्यवहारनिर्वाहकं अर्थान्तरमङ्गीकार्यम् । तदर्थान्तरमभाव इति सूत्रार्थः ।

## अथ दशमाध्याये प्रथममाह्निकम् ।

३५९. इष्टानिष्टकारणविशेषाद् विरोधाच्च मिथः ॥ १ ॥

बुद्धिनिरूपणं वृत्तम् । सुखदुःखे निरूप्येते । सुख दुःखं च मिथो भिन्नम् । कारणयोः विशेषात् भेदात् । चन्दनस्पर्शादि इष्टं सुखकारणम् । अग्निस्पर्शादि अनिष्टं दुःखकारणमिति । ननु सुखदुःखभेदः सुप्रसिद्धः । किञ्च सुखदुःखभेदादेव तत्साधनयोः इष्टत्वानिष्टत्वकृतो भेदो भवति । तत्कथं विपरीतमुच्यत इति चेन्न । केचित् अल्पत्वास्थिरत्वादिभिः सुखमपि दुःखमेवाहुः । तदौपचारिकम् । न तु सुखमेव नास्तीति मन्तव्यमिति प्रतिबोधनाय भेदाभिधानात् । अभ्यासवशात् चन्दनाग्निस्पर्शादिकं लोके स्वत एवेष्टानिष्टवत् व्यवहरन्तीति तथात्वोक्तिश्च । अर्थान्तरभावः भेदः ।

३६०. संशयनिर्णयान्तराभावश्च ज्ञानान्तरत्वे हेतुः ॥ २ ॥

संशयनिर्णयरूपे ये अन्तरे ज्ञानभेदौ तयोरभावः सुखदुःखयोः ज्ञानान्तरत्वे ज्ञानाद् भिन्नत्वे हेतुः ज्ञापकः । केचित् सुखं दुःखं च ज्ञानमेवेति मन्यन्ते । तन्नेत्याह । ज्ञानं द्विविधं संशयो निर्णयश्चेति ज्ञानस्य विभागे न तृतीयः प्रकारोऽस्ति । अतः सुखं दुःखं वा यदि ज्ञानरूपं स्यात् तर्हि सुखे दुःखे वा वर्तमाने तस्य सविषयत्वात् कोटिद्वयं वा एक एव विषयो वा तत्र भायात् । तथा च तदा संशयो वा निर्णयो वा अस्तीति स्यात् । न चास्तीति शक्यं वक्तुम् । उपलम्भाभावात् । अतः सुखे दुःखे वा वर्तमाने संशयो निर्णयो वाऽस्तीति दुर्वचत्वेन तदभावात् वर्तमाने सुखदुःखे न ज्ञानरूपे इति तदन्यत्वं सिद्धम् ॥

३६१. तयोर्निष्पत्तिः प्रत्यक्षलैङ्गिकाभ्याम् ॥ ३ ॥

सुखदुःखयोरुत्पत्तिः प्रत्यक्षात् अनुमितेश्च । चन्दनस्पर्शप्रत्यक्षात् पुत्रजन्मश्रवणाच्च सुखम् । कण्टकस्पर्शप्रत्यक्षात् प्रियविश्लेषश्रवणाच्च दुःखम् ॥

३६२. अभूदित्यपि ॥ ४ ॥

अभूदिति स्मरणादपि तयोर्निष्पत्तिर्भवति । अत्र मे भगवद्दर्शनमभूदिति स्मरणात् सुखम् । अत्र मे शिशोः सर्पदंशोऽभूदिति स्मरणाद् दुःखम् ।

**३६३. सति च कार्यादर्शनात् ॥ ५ ॥**

पूर्वं कारणाभिधानात् तत्कार्यतया प्रतीते सुखदुःखे एवात्र कार्यपदेनाभिधीयेते। कस्मिन् सतीत्यपेक्षायां च कार्यप्रतिसम्बन्धितयोपस्थितेः कारणे सतीति लभ्यते। तथा च कारणे सत्यपि कार्ययोः सुखदुःखयोरदर्शनादिति सूत्रार्थः सम्पद्यते। अयं हेतुः। का प्रतिज्ञेति चिन्तायां हेतुस्वरूपपर्यालोचनया "शरीरं न सुखदुःखयोराश्रयः" इति गम्यते। तेन "सुखदुःखे किमात्मगुणौ उत शरीरगुणौ" इति संशयोऽपि व्यञ्जितः। सुप्तस्य शरीरे चन्दनोक्षणेन सुखं न जायते। पिपीलिकादिदंशेन दुःखमपि न जायते। अतो न तौ शरीरगुणौ।

**३६४. एकार्थसमवायिकारणान्तरेषु दृष्टत्वात् ॥ ६ ॥**

तस्यैव प्रबुद्धस्य ताभ्यां हेतुभ्यां सुखदुःखे जायेते। तथा च यो ज्ञाता तस्यैव ते इति निश्चिनुमः। तयोः आत्मवर्तिनोः एकस्मिन् तस्मिन्नात्मरूपे अर्थे पदार्थे समवायेन वर्तमानं ज्ञानं कारणं भवति। एवं च तस्य कारणस्य पर्यालोचनया तत्कार्ये सुखदुःखे आत्मसमवेते इति निश्चीयते। पुत्रजननादिश्रवणेन अर्थनाशादिश्रवणेन च जायमानौ हर्षविषादौ श्रोतुः आत्मन एव भवितुमर्हतः। पूर्वसूत्रे शरीरावृत्तित्वे हेतुरुक्तः। अत्र तु आत्मवृत्तित्वे।

**३६५. एकदेश इत्येकस्मिन् शिरः पृष्ठमुदरं मर्माणि तद्विशेषस्तद्विशेषेभ्यः ॥ ७ ॥**

ननु यदि सुखदुःखे आत्मगुणौ तर्हि कथं "पादे मे वेदना शिरसि मे वेदना" इत्यनुभव इति चेदत्राह। एकस्मिन् शरीरे एकदेश इति शिर आदीन्युच्यन्ते। मर्माणि गुह्यस्थानानि। ततः किमिति चेत् तद्विशेषेभ्यः तेषां एकदेशानां तत्सम्बन्धिभिः, तेषु जातैः विशेषैः छेदभेददाहकण्टकवेधादिभिः, तद्विशेषः दुःखस्य विशेषः 'पादे वेदना, शिरसि वेदना' इत्यादि विभिन्नव्यवहारविषयत्वं भवति। आत्मनाऽनुभूयमानाया वेदनायाः अवच्छेदकप्रदेशा इमे। न त्वनेन व्यवहारेण एकदेशानां वा एकदेशिनः शरीरस्य वा वेदनाश्रयत्वं भवति। प्रबलैर्हेतुभिस्तन्निरासादिति भावः।

सुखदुःखे प्रति विशिष्य वक्तव्यमुक्तम्। इच्छाद्वेषप्रयत्नाः पूर्वं षष्ठे उक्ताः। तेषु वक्तव्याभावादिहोपेक्षा ॥

इति
दशमेऽध्याये प्रथममाह्निकम् ॥

## अथ दशमेऽध्याये द्वितीयमाह्निकम्

३६६. **कारणमिति द्रव्ये कार्यसमवायात् ॥ १ ॥**

द्रव्ये कारणमिति व्यवहारो भवति । कुतः कार्यस्य तस्मिन् समवायात् समवायसम्बन्धेन उत्पत्तेः । द्रव्यं तादृशं कारणं भवति यत्र कार्यमुत्पद्यमान समवाय-सम्बन्धेन वर्तते, यथा तन्तुषु पटः, घटे रूपादिकञ्च । एतेन समवायिकारणं नाम किञ्चित् कारणमस्तीति बोधितं भवति ।

३६७. **संयोगाद्वा ॥ २ ॥**

कार्यसंयोगाद्वा द्रव्ये कारणमिति व्यवहारो भवति । यथा चक्रे उत्पद्यमानो घटः संयोगेन तत्र वर्तते । कुलालेन संयुक्तो भवति । एवं कार्यं यत्र संयोगि भवति तत् कारणं निमित्तकारणमुच्यते । परम्परया संयोगी दण्डोऽपि निमित्तकारणम् ॥

३६८. **कारणे समवायात् कर्मणि ॥ ३ ॥**

कर्मणि कारणमिति व्यवहारः कारणे समवायात् कार्यसमवायिकारणे समवा-यात् । द्रव्ये समवेतं कर्म तस्मिन् द्रव्ये संयोगविभागौ वेगञ्च जनयति । तस्मात् कर्म कारणम् । इदमसमवायिकारणमुच्यते ॥

३६९. **तथा रूपे कारणकार्यसमवायाच्च ॥ ४ ॥**

रूप इति गुणोपलक्षणम् । तथा गुणे । गुणेऽपि कारणे समवायात् कारण-व्यवहारो भवति । यथा पतति द्रव्ये आद्यपतनसमवायिकारणे समवायात् गुरुत्वं आद्यपतनं प्रति कारणं भवति । एवं द्रवत्वं आद्यस्पन्दनसमवायिकारणे जले समवा-यात् तत्प्रति कारणं भवति । रूपादिर्गुणस्तु कारणैकार्थसमवायाच्च कारणम् । पट-रूपस्य समवायिकारणं पटः । तेन सह एकस्मिन्नर्थे वस्तुनि तन्तौ समवायः तन्तुरूपस्य । तेन तन्तुरूपं पटरूपस्य कारणम् । इदमप्यसमवायि कारणम् ॥

३७०. **कारणसमवायात् संयोगः पटस्य ॥ ५ ॥**

पटसमवायिकारणेषु तन्तुषु समवायात् संयोगः पटस्य कारणम् । संयोगस्य गुणस्य असमवायिकारणत्वमिदमुक्तं उत्तरत्र विशेषविवक्षया ।

३७१. **कारणाकारणसंयोगाच्च ॥ ६ ॥**

न परं कारणे समवायात् संयोगः कारणं, अपि तु कारणाकारणे समवायाच्च। कायपुस्तकसंयोगस्य समवायिकारणं कायः। कायस्य समवायिकारणं हस्तः। अस्मिन् समवायः हस्तपुस्तकसंयोगस्य। अयं कायपुस्तकसंयोगस्यासमवायि कारणम् ॥

३७२. **संयुक्तसमवायादग्नेर्वैशेषिकम् ॥ ७ ॥**

विशेष एव वैशेषिकम्। विशेषगुणः। असाधारणगुण इति यावत्। अग्नेरसाधारणो गुणः उष्णस्पर्शः। सः संयुक्तसमवायात् स्वकार्यस्य यत्समवायिकारणं तेन यत् संयुक्तं तत्र समवायात् कारणं भवति। पाकजरूपादीनां समवायिकारणं परमाणुः। तेन संयुक्तोऽग्निः। तत्र समवायः उष्णस्पर्शस्य। अयं पाकजरूपादेरसमवायिकारणम्।

एवं समवायिकारणं असमवायिकारणं निमित्तकारणमिति त्रिविधं कारणं निरूपितम्। उद्देशसूत्रे तत्त्वज्ञानान्निःश्रेयसमिति अन्ते पञ्चम्या तत्त्वज्ञानं कारणमुक्तम्। अत इह शास्त्रान्ते कारणनिरूपणमिति ज्ञेयम् ॥

३७३. **दृष्टानां दृष्टप्रयोजनानां दृष्टाभावे प्रयोगोऽभ्युदयाय ॥ ८ ॥**

कृतेन विस्तृतेन निरूपणेन पदार्थानां तत्त्वज्ञानं सम्पाद्य वेदविहितानि कर्माण्यनुष्ठेयानि। तत्रोपयुज्यमानानि द्रव्याणि गुणाश्च क्रियमाणानि कर्माणि च लोकसिद्धा एव पदार्थाः। तेषां प्रयोजनान्यपि लोकसिद्धानि तानि तानि भवन्ति। परन्तु तेषां यज्ञान्तर्गततया प्रयोगे दृष्टं फलं किमपि नास्ति। न हि हूयमानस्य हविषः चतुरो मुष्टीन् निर्वपतीति विहितसङ्ख्यापरिमाणादेः प्रयाजानूयाजादिरूपकर्मणां च दृष्टं फलं किमप्यस्ति। न च तावता निष्फलत्वमेव। वेदविहितत्वात्। तर्हि किं फलमिति चेत् अभ्युदयः। अपूर्वद्वारा स्वर्गादिकं तत्र तत्र वेद एव श्रूयमाणम्। अथातो धर्मं व्याख्यास्याम इति प्रतिज्ञातं धर्मव्याख्यानं इत्थं अतिसंक्षेपात् कृतमिति ज्ञेयम्।

३७४. **अस्मद्बुद्धिभ्यो लिङ्गमृषेस्तद्वचनादाम्नायस्य प्रामाण्यम्। ९ ॥**

आम्नायस्य प्रामाण्यं सिद्धं कृत्वा तत्प्रामाण्यं धर्मबोधकत्वादेव। अन्यथा इतरेषां सर्वेषामर्थानां प्रत्यक्षानुमानाभ्यामवगतत्वेन प्रमेयाभावात् तस्याप्रामाण्यमेव स्यात्। अतो वेदप्रामाण्यमङ्गीकुर्वद्भिः अत एव तत्प्रमेये धर्मे श्रद्धालुभिः तस्य ज्ञानं

अवश्यं सम्पादनीयमित्यभिप्रेत्य "तद्वचनादाम्नायस्य प्रामाण्यम्" इति शास्त्रारम्भे उक्तम्। अधुना शास्त्रोपसंहारे तत्प्रामाण्यमेव कथमित्येतन्निरूपयति। आप्तोक्तत्वेन हि शब्दस्य प्रामाण्यम्। परम आप्तः ईश्वरः। तेन कृतत्वात् वेदस्य प्रामाण्यं निराबाधम्। इदमुच्यते तद्वचनादाम्नायस्य प्रामाण्यम् इति। तेन ऋषिणा सर्वज्ञेन सर्वदोषप्रत्यनीकस्वभावेन सर्वेश्वरेण वचनात् उक्तत्वात् उपदिष्टत्वात् आम्नायस्य वेदाख्यस्य शब्दस्य प्रामाण्यं यथार्थबोधकत्वं भवति।

ननु सर्वेश्वरः कश्चिदस्तीति कथं प्रत्येतव्यम्। तत्सत्त्वे किं प्रमाणमित्यत्राह 'अस्मद्बुद्धिभ्यो लिङ्गमृषे, इति। ऋषेः सर्वज्ञस्य सर्वेश्वरस्य लिङ्गं अनुमापको हेतुः, अस्माकं याः बुद्धयः अनुभवाः कार्यकारणविषयाः इदमस्य कार्यस्य कारणं इदमस्य कारणस्य कार्यं, इत्यन्वयव्यतिरेकसम्पन्नाः निश्चयाः तेभ्यो लभ्यते, सम्पद्यते। प्रतिकार्यं कारणं किञ्चित् पश्यामः। कारणं विना किञ्चित् कार्यं भवेदिति शङ्कितुमपि न शक्यम्। एवं व्याप्तिविषयात् सुदृढात् निश्चयात् ईश्वरानुमानं सुकरं भवति। क्षित्यङ्कुरादिकं सकर्तृकं, कार्यत्वात्, घटवदिति। एवमनुमानसिद्धेन आप्ततमेन भगवता कृत्वा उपदिष्टत्वात् वेदः प्रमाणमिति॥

इति

कणादसूत्रवृत्तौ सुगमायां

दशमेऽध्याये द्वितीयमाह्निकम्।

## समाप्तं शास्त्रम्

अध्यन्तामृतसिन्धुमन्थनपरिस्फूर्जद्रसोर्म्याप्लव-

व्यासङ्गातिशयात् तदन्यविषयव्यावृत्तचित्तस्य मे।

तन्त्रे काणभुजेऽजनीत्थमधुना व्याख्याविधानोद्यमः

सूत्राणां निजमर्थमाह विवृतिर्या साऽस्ति नैकाऽपि यत्॥

अर्थो निबन्धेष्वयमक्षराणामित्येवमार्यैरभिधेयमादौ।

स्थाने ततो बुद्धिबलानुरूपो विधित्सितो वादझरीविहारः॥

व्योमर्षिनन्दशीतांशुप्रमिते वाह्यवत्सरे।

पूरणं कणभुक्सूत्रव्याक्रिया सुगमाऽगमत्॥

पूर्वोत्तरमीमांसाचिरपरिचयसिद्धबुद्धिवैशद्यः ।
श्रीशैलस्तातार्यः पण्डितराजो व्यधादिमां सुगमाम् ।।

